॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

८५

नीतिविद्यावतारेण श्रीकौटिल्येन प्रणीतं

# चाणक्यसूत्रम्

( प्रथमाध्यायमात्रम् )

बालबोधिनी-सरला-संस्कृत-हिन्दी
टीकाद्वयोपेतम् ।



प्रकाशकः-
जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।

# सिद्धान्तकौमुदी जेबी-गुटका

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्तकौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेबी में रख लीजिये और जब चाहें सिद्धान्तकौमुदी की आवृत्ति कीजिये। सूत्रसूची-धातुसूच्यादि परिशिष्ट सहित। ३)

**सिद्धान्तकौमुदी**—पं० गोपालशास्त्रीनेनेकृत परीक्षोपयोगी 'सरला' टीका तथा रूपलेखनप्रकार-पंक्तिलेखनप्रकार आदि परीक्षोपयोगी विविध परिशिष्ट सहित स्त्रीप्रत्ययान्त १॥) कारकान्त २)

# प्रबन्ध-पारिजातः

इसमें परीक्षार्थी छात्रोंको संस्कृत प्रबन्ध रचना लिखने के नियम अत्यन्त सरल रूपमें समझाये गये हैं और तदनुसार परीक्षोपयोगी 'प्रबन्ध लेखनप्रकार' (परीक्षामें आने योग्य निबन्धों का उत्तर) इस तरह सरल और संक्षिप्त में लिखा गया है कि अभ्यास कर लेने पर भी विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर सकते हैं। इतना ही नहीं अन्तमें (१) 'पत्र-लेखन प्रकार' (चिट्ठी-पत्री, आवेदन पत्र आदिका उल्लेख) तथा प्रसंगोपयुक्त (२) 'सुभाषितगद्यावली' (३) 'सुभाषित-पद्यांशावली' और (४) 'लौकिक न्यायमाला' आदि विषयोंका समावेश करके आधुनिक चतुरस्र विद्वान् बननेका सुगम रास्ता दिखाया गया है। विश्वास है कि आजतक के प्रकाशित प्रबन्धोपयोगी ग्रन्थों में इस 'प्रबन्धपारिजात' के समान दूसरी कोई भी पुस्तक नहीं है। शीघ्रता कीजिये कठिन परिस्थिति के कारण इसकी बहुत कम प्रतियाँ छपी हैं १।)

# विदुलोपाख्यानम्

**सान्वय-लीला विलास-संस्कृत-हिन्दीटीकाद्वयोपेतम्।**

सन् ४८ के नवीन पाठ्यक्रमके अनुसार यह ग्रन्थ प्रकाशित किया गया है। इस ग्रन्थकी 'लीला' नामक संस्कृत व्याख्यामें अन्वय, पर्याय, समास, कोशादि देकर श्लोकोंकी अति सरल व्याख्या कर दी गयी है। साथमें 'विलास' नामकी विस्तृत हिन्दी भाषा टीका होनेसे तो इस संस्करणकी उपयोगिता और भी अधिक बढ़ गयी है। प्रथमाके सुकोम-लमति विद्यार्थियोंके लिये यही एक सर्वोत्तम संस्करण सिद्ध हो चुका है। शीघ्रता कीजिये इसकी बहुत ही कम प्रतियाँ बच गयी हैं। द्वितीय संस्करण ।।।)

॥ श्रीः ॥

हरिदास–संस्कृत–ग्रन्थमाला

८५



नीतिविद्यावतारेण श्रीकौटिल्येन प्रणीतं

# चाणक्यसूत्रम्

( प्रथमाध्यायमात्रम् )

पण्डितश्रीविजयशङ्करमिश्र एम० ए० कृतया

बालबोधिन्याख्यया संस्कृतव्याख्यया भूमिकया च सहितम् ।

पण्डितवेतालोपाह्वानन्तरामशास्त्रिणा साहित्याचार्येण

सरलाख्यया भाषाटीकया प्राक्कथनेन च

सनाथीकृत्य संशोधितम् ।

प्रकाशकः–

जयकृष्णदास–हरिदास गुप्तः–

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

तृतीयं संस्करणम् ] मूल्य ।≡) [ संवत् २००४

॥ श्रीः ॥

# प्रास्ताविकं वक्तव्यम् ।

अथामुं चाणक्यसूत्रस्य प्रथमाध्यायं परोक्षोपयोगिनं मंशोध्य संमुद्य सप्रमोदं पुरस्कर्तुं प्रस्तुताः स्मो वयम् । विष्णुगुप्तापरनामधेयनीतिविन्मूर्धन्यमतिमत्तम-श्रीमदार्यचाणक्यप्रणीतस्य सकलोपयोगसाधनीभूतनीतिसारसङ्ग्रहस्याध्यायपञ्च-कात्मकस्यैतद्ग्रन्थरत्नस्य टीकैका कलिकातानगर्यां मुद्रितोपलभ्यते । एतत्प्रथमा-ध्यायस्य कलिकातासंस्कृतप्रथमपरीक्षापाठ्यपुस्तकान्यमतस्य सटीकमुभाभ्यां कल्पित-मुभयत्र सञ्जातं संस्करणं नयनगोचरतां गच्छति । काश्यामन्यत्र च प्रकाशितं तदेतत्पुस्तकद्वयमनन्यसामान्यबुद्धिसम्पन्नप्राज्ञवरप्रणीतसंस्कृतहिन्दीभाषामयव्याख्या द्वयेन सम्भूषितं वर्तते ।

'अस्माभिरपि प्रयतनीयं विद्यार्थिनां मनस्तोषाये'ति सविशेषमान्तरं भा वहन्तस्तत्प्रेरिताः श्रीमद्विद्याविलासमुद्रणालयस्वामिनः संस्कृतभाषोद्धारबद्धादराः श्रेष्ठिवरश्रीजयकृष्णदासगुप्तमहोदयास्तदर्थमेतत्प्रथमाध्यायस्य संस्कृतहिन्दीभाषाद्वय-मयीं टीकां प्रणेतुमस्मान् बहुशोऽन्वरुन्धन् । प्रत्यहविधीयमानविद्यालयीयकार्य-विशेषव्यापृतिवशात्पर्याप्तावकाशसौकर्याद्यनुकूलसाधनाभावादस्मदीयमुत्साहशून्यं चेतो न नाम स्थैर्यं कार्येऽत्र किञ्चित्कलयाञ्चक्रे ।

यथाप्रसङ्गं च कदापि समुपस्थितेषु वार्तालापव्यतिकरेषु नूतनोपजातपरिचया अपि प्रकृतिसुन्दरं प्रगाढं सौहार्दं प्रकटयन्तः सहृदयाः प्रश्रयभूषणाः श्रीविजयशङ्कर-मिश्र एम्. ए. महोदयाः सहजसौजन्यभूमयः प्रकृतमिदं कार्यं करणीयमुपलभ्य तदौपयिकमात्मनो भूयांसमुत्साहं व्यक्ततां निन्युः । उत्साहाध्यवसायसम्पत्समन्वि-तानामुदारबुद्धीनाममीषां प्रकृतकार्यानुरूपः सोऽयमुत्साहो बलवदस्मदीयेऽपि मनसि तदारोपणं कर्तुं पारितवान् । परस्परोत्साहसमन्विताभ्यामेकैकव्याख्याप्रणयनसमयेन च तदनु सप्रमोदं प्रवृत्तमावाभ्यामत्र । गीर्वाणवाङ्मयीं व्याख्यां प्रणेतुमुत्साहविशेषं दधानेषु श्रीमत्सु मिश्रमहोदयेषु तदवशेषभूतं हिन्दीभाषया सूत्रार्थप्रकाशनं नाम

कार्यान्तरमस्मत्कर्तव्यपक्षं शिश्रिये । सपरिश्रमश्चात्र यथासमयं प्रवृत्तयोरावयोरस्य टीकाप्रणयनमुद्रणोचितसंशोधनादिकमखिलं कार्यमखिलानन्दकन्दकरुणाकरपरमेश्वर-करुणाकटाक्षेण परिपूर्णं जातमितीदं परतरप्रमोदस्थानम् ।

इदं किल सर्वतः प्रत्यक्षमेव—"न तावत्कार्यस्य कस्यापि स्वरूपं यथावत्परिचीयते, न यावदुपक्रम्यते तत् । उपक्रान्ते च तत्र तदीयं रहस्यं शनैः शनैरुद्घाटितं भवती"ति । अत्र हि टीकाचिकीर्षापथे प्रथमं निराकुलेऽपि तन्निर्माणसमये पुनस्तत्र तत्र तत्तत्पर्यालोचनीयगम्भीरविषयसांमुख्यमापतितं बलवदस्मन्मनो व्याकुलत्वमध्यजीगपत् । ग्रन्थेऽस्मिन् कौटिल्यबुद्धेर्विलसितानां कुत्रापि सूत्राणां भावगाम्भीर्यं भृशं दुर्गमम्, तत्खलु सूक्ष्मयैव बुद्ध्या निपुणं पर्यवेक्षणीयम् । इतरे च टीकाकृन्महोदयाः स्थलविशेषे स्वकीयं पाण्डित्यं पूर्णं प्राचीकटन्, परमिदं न तावत्समुचितं पन्थानमारोहति स्मेति बलवत्तरोऽस्माकं विश्वासः । यत्किमपि प्रलपितमिव प्रतीयते तत् । तत्र विद्यार्थिनो विरुद्धं बोधिताः स्युरित्येव तावन्मनो दुनोतितमाम् । तादृशेषु स्थलेषु तत्तट्टीकाकृतां चेष्टितं भावगाम्भीर्यं च परिवीक्ष्य प्रसह्य मुह्यतां प्रकृतां संस्कृतव्याख्यां विदधतां मिश्रमहोदयानां मनः कामपि चित्रामेव दशां प्रतिपेदे । तत्र किल स्वतोऽन्तरुद्भूतप्रतिभयैव किमपि निश्चित्य कृतं विचारसाहचर्यमेव नौ कमपि मार्गं प्रादर्शयत् । इत्थमेव तत्तत्पर्यालोचनया प्रायो विचारं स्वीयमेवोचितमवलम्ब्य यदिदमुपक्रान्तमावाभ्यां कार्यं लघुशरीरमपि गम्भीरनीतिविचार-सापेक्षं निर्विघ्नं पूर्णतामानिन्ये, स चायं श्रीमद्गुरुवरकरुणायाः परतराचिन्तनीय-शक्तेरेव नियतं वाचामगोचरोऽनुभावः ।

आस्तां तावत्, स चायं संस्कृतव्याख्यानरूपो ग्रन्थः सर्वतोऽस्माभिर्निपुणं सावधानं च निरीक्षितो यथामति संशोधितः प्राक्कथनेनानेन सनाथीकृतो हिन्दी-भाषया च सम्भूषितः प्रकाशमायातः साम्प्रतं कलिकातास्थानीयप्रथमपरीक्षार्थिनां विद्यार्थिनामुपकाराय भूयसे जागर्तुतमाम् । 'इदमेव नूनं विजयते व्याख्यानं विद्यार्थिनामुपयोगाये'ति पक्षपातरहितं निःशङ्कं निःसङ्कोचं च संसूच्य यथाबुद्धि संशोधितेऽप्यत्र मुद्रणालयादिदोषोपजातोपलब्धस्खलितविषयोपेक्षणाय सुजनान् सम्प्रार्थ्य प्रणम्य संस्मृत्य सादरं परमेश्वरं सद्गुरुं च विरम्यते वृथावक्तव्यपल्लवनादिति शम् ।

पौषशुक्लद्वितीया, सं० १९९९ } अनन्तरामशास्त्री वेतालः ।

# भूमिका ।

प्रस्तुतं पुस्तकमिदं कलिकातास्थानीयप्रथमपरीक्षायां पाठ्यपुस्तकत्वेन निर्धारितम् । मूलग्रन्थस्तावत्पञ्चाध्यायपरिमितः, किन्तु प्रथमाध्याय एवोक्तपरीक्षायां स्थापितः । नीतिशास्त्ररहस्यविदां चूडामणिभूतो विदुषामग्रणीर्विद्यासमुद्रमन्थनमन्दरायमाणमतिर्विष्णुगुप्तो नाम श्रीचाणक्यस्तत्तच्छास्त्राण्यवगाह्य तेभ्यश्च सारं गृहीत्वा, लघुकायान्यप्यतिगभीरविस्तृतार्थानीमानि सूत्राणि व्यरचयत् । एतानि सूत्राणि खलु विदुषां साहाय्येन विना नहि स्वल्पधियां विद्यार्थिनां सुबोधानि । अत एव बहूनां नीतिज्ञंमन्यानां टीकाटिप्पण्यादिविधानेन तदर्थमाविष्कर्तुं प्रयासा दृश्यन्तेऽत्र विषये । परन्तु तेषु तत्र तत्र त्रुटिबाहुल्यादतिखिन्नहृदया मदीयज्येष्ठसहोदरस्थानीयाः प्राप्तसाहित्याचार्यपदवीकाः सहृदयाः पण्डितवराः श्रीमन्तो वेतालाऽनन्तरामशास्त्रिण इमं जनं काञ्चित्सुगमां सरलां सुविचार्यं च प्रणीतां टीकां विद्यार्थिवर्गलाभाय विरचयितुं प्रेरितवन्तः । विद्योदधिपारगाणां तेषामेव शास्त्रिमहोदयानां प्रेरणया साहाय्येन चास्यैकाध्यायमात्रकायस्य ग्रन्थस्य 'बालबोधिनी'ति टीका मया प्रणीता । एकाकिना मया न कथमप्येतस्मिन् प्रयत्ने साफल्यमवगन्तुमपारयिष्यत यदि शास्त्रिमहोदया अतिस्नेहपुरःसरं यथोचितविचारसूचनैरेतां टीकां हृदयङ्गमां नाकरिष्यन् । प्रथमप्रयास एव मामकीनोऽयं गीर्वाणवाणीमाश्रित्य कस्यचिद् ग्रन्थस्य रहस्योद्घाटने । अत एवोदारहृदयैर्मनीषिभिर्मानुष्यकभावसुलभदोषबाहुल्येऽत्र क्षन्तव्योऽस्मीति प्रार्थये ।

अथेदानीं प्रसङ्गवशाद् ग्रन्थं ग्रन्थकारं चाधिकृत्य किञ्चित्प्रस्तौमि । पञ्चाध्यायपरिमिते मूलग्रन्थेऽस्मिन् बहूनां नीतितत्त्वानां विमर्शो दृश्यते । स्वीयकर्तव्यप्रधानभूतं प्रजापालनरूपं धर्ममाश्रित्यैव राजा सदा वर्तितुमर्हति । प्रसङ्गोचितं कूटनीत्याश्रयणमपि प्रजापालनं लक्ष्यीकृत्यैव समीचीनं राज्ञः । स्वार्थपरं प्रजाहितविरोधिनं च राजानं विनापि प्रकृतयो राष्ट्रं सञ्चालयितुं समर्थाः । परन्तु नीतिकोविदं प्रजारक्षकं समर्थं च नृपं प्राप्य राष्ट्रं क्षिप्रमेवातितरामुन्नतिं गच्छति । अत एव राष्ट्रोन्नतौ राज्ञ उपादेयता प्रतीयते । प्रकृतयश्च पुनः सर्वथैव भक्तिपुरःसरं राजानमुपसेवेरन् । राजा खलु सर्वासां प्रकृतीनां पितेव रक्षकः, अतः पितेव स तासां पूज्योऽप्यस्ति । एवं नानाविधानि राज्ञः प्रकृतीनां च कर्तव्यानि निर्दिष्टानि ग्रन्थरत्नेऽस्मिन् ।

अमुमेव सूत्रभूतं ग्रन्थमाश्रित्य श्लोकबद्धं चाणक्यनीतिदर्पणनामधेयख्यातमपरं पुस्तकमपि प्राकृतजनेषु चाणक्यकृतमिति प्रसिद्धम् । परन्तु तस्मिन्नुपदिष्टा विचारा एव चाणक्यबुद्धिनिःसृताः न तु ते श्लोकाः । अतो न समीचीनं कौटिल्यस्य वाचां वैदग्ध्यं भाषायाः पाण्डित्यं वानुमातुं तं श्लोकबद्धग्रन्थमाश्रित्य ।

सोऽयं नयपारगः कौटिल्यः श्रीविष्णुगुप्तो नाम चाणक्य ईशवीयवत्सरेभ्यः प्राक् चतुर्थे शतके देशमिमं स्वजन्मनाऽलञ्चकारेति निर्विवादम्। तस्यैव महत्तमप्रयत्नेन पाटलिपुत्रराज्यसिंहासनाच्छूद्रकुलोद्भूता राजानश्च्याविताः। मौर्यः श्रीचन्द्रगुप्त आर्यावर्तस्य चक्रवर्तिराजाभूत्कौटिल्यस्यैव बुद्धिविलासबलेन।

श्रीविशाखदत्तकृतमुद्राराक्षसानुसारेणासौ। राक्षसं चन्द्रगुप्तस्य प्रधानामात्यं कृत्वा पुनरपि स्वकीयमाश्रमं भेज इति सर्वेषां विदितम्। तत्कथमार्यचाणक्येन शूद्रनृपानुन्मूल्यापि शूद्र एव वृषलश्चन्द्रगुप्तः पुनर्मगधसिंहासनाधिरूढः कृत इत्यत्र शङ्कोत्थाप्यते। विशाखदत्तकृतग्रन्थमनुसृत्यैव चन्द्रगुप्तस्य शूद्रत्वमधुना प्रथितं लोके, किन्त्वद्यतनपुरातत्त्वविदस्तं पिप्पलीकाननस्थितानां शाक्यवंशीयानां मौर्योपाह्वानां क्षत्रियाणामेवान्यतमं मन्यन्ते। शौर्यसाहसकुशाग्रबुद्धित्वादिगुणैरुपेतः क्षत्रिय एव श्रीविष्णुगुप्तेनार्यावर्तचक्रवर्तिपदे स्थापितो न पुनः कश्चिच्छूद्रः। आर्यराज्यवैजयन्तीमार्यावर्ते स्थापयित्वासौ तपस्वी पुनरपि विरक्त इव स्वाश्रमपदं प्रपेदे। अनेनास्य महती कार्यक्षमता ब्राह्मणसुलभनिःस्पृहता च द्योत्येते।

अस्य महात्मनो जन्मभूमिविषयविचारोऽपि विवादग्रस्त एव। केचित्तु तमिमं तक्षशिलावासिनं मन्यन्ते। अपरे पाटलिपुत्रीय एवासीदसाविति कथयन्ति। यत्किमप्यास्तामेतत्, परमिदं तावन्निर्विवादं यत्तेन तक्षशिलायां तत्तच्छास्त्रशिक्षा लब्धा पाटलिपुत्रे च तदीयः प्रयोगः कृतः। तक्षशिला किल सर्वासां विद्यानामुद्गमस्थानमिवासीत्तदा। सुदूरदेशेभ्य आगत्यान्तेवासिनस्तत्र जङ्गमपाण्डित्यस्वरूपेभ्य आचार्येभ्यश्चेतःप्रसादजनयित्रीर्बुद्धिविकासकर्त्रीश्च तास्ता विद्याः कलाश्च सम्यग्गृहीत्वा स्वस्वजन्मानि सफलीकृतवन्तः। अगाधबुद्धिसागरः सकलविद्यापारङ्गतश्चाणक्यः पुनरेवम्भूतां तक्षशिलां विहाय कुत्रान्यत्र विद्या अभ्यस्येत्? मगधदेश एव तदानीन्तनं सर्वसमृद्धं शक्तिमत्तमं च राष्ट्रमासीत्, किन्तु शूद्रनृपात्याचाररतिबाधिता आसन् प्रजास्तत्र। एतन्महद्राष्ट्रमेवानुकूलराजसद्भावेनाधिकशक्तिशालि कृत्वाऽलक्षेन्द्रप्रभृतयो यवनाः पराजेतुं सुशका इति सम्यक् पर्यालोचितं तेन मनीषिणा। एवं महता प्रयासेनानुपमबुद्धिविलासेन चासौ महात्मना अस्माकं जननीस्वरूपां जन्मभूमिं यवनपदाघातेभ्यो रक्षितवान्।

एवंविधस्यार्यसंस्कृतिरक्षकस्य महात्मनश्चाणक्यस्य ग्रन्थोऽयं सूत्ररूपः स्वल्पकायोऽपि विद्यार्थिनां हस्तामलकत्वं भजेच्चेत्तेषां महानुपकारो जायेतेति विश्वस्यैवायं मदीयः प्रयत्नः। यद्यनया बालबोधिन्या विद्यार्थिनां कश्चिल्लाभो भवेत्तर्हि कृतकृत्यमहमात्मानं मंस्ये।

सकललोकश्रेयोविधायको भगवान् विश्वनाथो नः शं तनोतु। इत्यलम्।

पौषकृष्णचतुर्दशी
संवत् १९९५,

विदुषां विधेयः—
विजयशङ्करमिश्रः।

॥ श्रीगणेशाय नमः ॥

# चाणक्यसूत्रम् ।

## बालबोधिन्याख्यया संस्कृतव्याख्यया सरलाख्यया भाषाटीकया च समेतम् ।

---

क्षीराम्भोनिधिसिक्तयत्सुवसनामर्देन शुक्लीकृताः
सान्द्रानन्दभरेण मानसगृहा मुक्तानुरक्ताः स्थिताः ।
यद्वीणाक्वणनात् प्रबोधहरिणो दूरात् समाकृष्यते
सा नः पातु समस्तलोकवरदा पद्मासना शारदा ॥ १ ॥

येनाऽदायि भवस्ततश्च विनयः स्नेहार्द्रचित्तेन मे
सद्विद्या च सदा सुबोधमनसामह्नाय मोदप्रदा ।
यो वंशस्य सुकीर्तिकल्पलतिकां संवर्धयन् संस्थितो
वाक्पीयूषजलेन, पूज्यजनकं स्वर्गङ्गतं तं भजेत ॥ २ ॥

चरणकुसुमधूलिर्यस्य लोके विकीर्णा
प्रभवति विधुराणां चेतसो मोदतत्यै ।
गलति मतितमिस्रं यस्य पादप्रसादाद्
गुरुवरसवितारं सादरं तं नतोऽहम् ॥ ३ ॥

चाणक्यो नयपारगो मतिमतामग्रेसरः काऽग्रणी-
र्धीराणां, क्व च नीतिलेशविदसावप्रौढबुद्धिर्जनः ।
किन्त्वद्यारचिता गुरोः करुणया चेद् बालबोधिन्यसौ
स्याद् बालोपकृतिक्षमात्र, विजयो नूनं कृतार्थस्ततः ॥ ४ ॥

॥ श्रीः ॥

बन्दि विनयाक गुरु सुमिरि ईश अनादि अनन्त ।
**सूत्रन की चाणक्य** के भाषा करइ अनन्त ॥ १ ॥

ग्रन्थारम्भे निर्विघ्नपरिसमाप्त्यै मङ्गलं निबध्यते । अमुमेव शिष्टाचारमनुसरनीतिपयोधिमन्थनमन्दरायमाणप्रगाढप्रतिभः प्रेक्षावान् श्रीमान् विष्णुगुप्तो नाम कौटिल्यश्चाणक्यः सकललोकव्यवहारमूलभूतां श्रियमेव तावत्प्रार्थयितुं प्रक्रमते—

## सा श्रीर्वोऽव्यात् ॥ १ ॥

**सा श्रीरिति** । सा–सर्वत्र प्रसिद्धा सर्वैरनुभूता प्रस्तावसङ्गता च, श्रीः–लक्ष्मीः, वः–युष्मान् सांसारिकान्, अव्यात्–पायात् । श्रियं विना जगति किञ्चिदपि केनापि साधयितुं न शक्यते । अत एव नीतिज्ञो ग्रन्थकारस्तामेव प्रथमं रक्षणोपयोगिनीं सम्भावयंस्तदर्थं प्रार्थयते । लक्ष्मीकृपाकटाक्षरक्षिताः सर्वेऽपि दुष्करमप्यर्थं सुकरतां नयन्तीति तत्कर्तृकजगद्रक्षणप्रार्थनं प्रासङ्गिकमेव ॥ १ ॥

**वह ( प्रसिद्ध ) लक्ष्मी तुमलोगों की रक्षा करे** ॥ १ ॥

इह खलु जगति सुखैषणा सर्वेषामेव प्रत्यक्षतो दृष्टिपथं नीयते । लक्ष्म्याः करुणया सम्पाद्यं तच्च सुखं कुतो लभ्येतेति तत्कारणं धर्ममेव प्रतिपादयन्नाह—

## सुखस्य मूलं धर्मः ॥ २ ॥

**सुखस्येति** । सुखस्य–निर्वृतेः, मूलम्–प्रधानकारणम्, धर्मः भवति । सुखं नाम सर्वैरभिलष्यमाणः परतरप्रसादजनको दुःखाद् बहिर्भूतश्चित्तवृत्तिविशेषः । धर्मस्तावदैहिकामुष्मिकसकलार्थप्रापको वेदबोधितकर्तव्यताको विधिविशेषः । वस्तुतो लोके धर्मेणैव सुखं लभ्यते । अधर्मसंमिश्रं सुखं दुःख एव पर्यवस्यति । धर्म एव मनुष्यान् समुन्नतेः पन्थानं प्रापयतीति धर्मस्य सुखजनकत्वं निर्विवादम् ॥ २ ॥

**सुख का प्रधान कारण धर्म है** ॥ २ ॥

अधुना सुखस्यापि प्रधानकारणमर्थं निरूपयति—

## धर्मस्य मूलमर्थः ॥ ३ ॥

**धर्मस्येति** । धर्मस्य–ऐहिकामुष्मिककल्याणसम्पादकस्य श्रुतिविहितकर्तव्यविशेषस्य, मूलम्–मुख्यहेतुः, अर्थः–सकलव्यापारसिद्धिबीजभूतं धनम्, भवतीति शेषः । सर्वान्दामासादर भजमानस्य दारिद्र्यस्य निराकरणायाऽमोघशस्त्रमिवार्थः सर्वैरभिलष्यते । न कदाचिदर्थमन्तरेण कामपि सिद्धिं लब्धुं कस्याप्युपकारं वा

कर्तुमीश्वरो नरः। किं बहुना, स धर्मसाधनप्रधानकारणीभूतस्य स्वशरीरस्यापि रक्षणे समर्थो न स्यात्। अतोऽर्थो धर्मस्य जीवितमेवेति स्पष्टम् ॥ ३ ॥

**धर्म का प्रधान कारण धन है ॥ ३ ॥**

धर्मोपादानभूतमर्थं निरूप्य तदुद्भवहेतुं राज्यं वर्णयति—

## अर्थस्य मूलं राज्यम् ॥ ४ ॥

**अर्थस्येति**। अर्थस्य—सकललोकव्यापारसाधकस्य धनस्य, मूलम्—प्रधानकारणम्, राज्यं भवति। राज्यं तावत्—स्वस्वकर्तव्येषु दत्तचित्ताभिः सुशासनेन विनीताभिः प्रकृतिभिः परिपूर्णः केनचिदपि वैदेशिकशासकेनाऽबाध्यमानो देशविशेषः। तत्तद्वस्तुव्यापारेण कृषिकर्मणा वा धनमुत्पाद्यते। व्यापारादिकं च पुनः कस्मिंश्चित् सुव्यवस्थिते देश एव सम्भवति। अतो धनोत्पादने राज्यमेव प्रयोजकम् ॥ ४ ॥

**धन का प्रधान कारण राज्य है ॥ ४ ॥**

अर्थोत्पत्तिमूलभूतं राज्यं निर्दिश्य तत्प्रधानकारणमिन्द्रियजयं प्रतिपादयति—

## राज्यमूलमिन्द्रियजयः ॥ ५ ॥

**राज्यमूलमिति**। राज्यमूलम्—राज्यस्य दृढशासनसम्पन्नस्य देशस्य मूलम् आधारभूतः, इन्द्रियजयः—इन्द्रियाणां मनश्चक्षुःप्रभृतीनामेकादशानां जयः वशीकरणम्, भवतीति शेषः। किञ्चिदपि राज्यमधिगन्तुं तद्रक्षितुं वा महती शक्तिरपेक्षिता। सा च शक्तिर्न कदाचिदसंयमिना लभ्यते। अतो राज्यार्थिनेन्द्रियजिता भवितव्यमित्युपदिष्टं भवति ॥ ५ ॥

**राज्य का प्रधान कारण इन्द्रियों का वश में करना है ॥ ५ ॥**

इन्द्रियजयस्य मुख्यहेतुं विनयं निरूपयति—

## इन्द्रियजयस्य मूलं विनयः ॥ ६ ॥

**इन्द्रियजयस्येति**। इन्द्रियजयस्य—इन्द्रियाणां तत्तद्विषयविशेषज्ञानसाधनानां पञ्चज्ञानेन्द्रियाणां तत्तच्छरीरव्यापारसम्पादनसाधनानां पञ्चकर्मेन्द्रियाणां च जयस्य, मूलम्—प्रधानकारणम्, विनयः—सुशिक्षया कुलीनत्वेन धर्मरतत्वेन चोत्पन्नाऽहङ्कारहन्त्री नम्रता, भवति। 'विनयाद् याति पात्रता'मिति विनयं विना न कोऽपि किञ्चिन्महत्कार्यं सम्पादयितुं समर्थः। प्रबलानामिन्द्रियतुरङ्गमाणां वशीकरणं न खलु लघु कार्यम्। तत्खलु विनयसम्पत्त्यैव सम्पाद्यम्। अत इन्द्रियजयैषिणा विनयसम्पन्नेन भवितव्यमिति नीतिकारोपदेशः ॥ ६ ॥

**इन्द्रियों को वश में करने का प्रधान कारण नम्रता है ॥ ६ ॥**

विनयस्याधारभूतां वृद्धोपसेवां निरूपयन्नाह—

## विनयस्य मूलं वृद्धोपसेवा ॥ ७ ॥

**विनयस्येति** । विनयस्य—सदाचारशिक्षोत्पन्नाया नम्रतायाः, मूलम्-मुख्य-हेतुः, वृद्धोपसेवा—वृद्धानां विद्यया वयसा सदाचारेण चोन्नतिं गतानां पूज्यानाम् उपसेवा ज्ञानार्जनाय समीपगमनपूर्वकं परिचर्या, भवति । अहङ्काररहित्यं नीति-कुशलानां केषाञ्चिदुपदेशेनैव सञ्जायते । त उपदेशाः पुनराप्तजनपरिचर्यामन्तरेण कथं लब्धुं शक्याः ? तस्मान्नम्रतालाभाय वृद्धजनपरिचर्या कर्तव्येति स्पष्टम् ॥७॥

**नम्रता का प्रधान कारण पूजनीय वृद्ध लोगों का उचित सेवन है ॥**

वृद्धसेवायाः फलं वक्ति—

## वृद्धसेवाया विज्ञानम् ॥ ८ ॥

**वृद्धसेवाया** इति । वृद्धसेवायाः—वृद्धानां ज्ञानवयःशीलसम्पन्नानां सेवायाः प्रणिपातपुरःसरं परिचर्यायाः, विज्ञानम्—विशेषेण नीतिदर्शनशिल्पादिज्ञानम्, जायत इति शेषः । शिल्पादिशास्त्राणां ज्ञानं तज्ज्ञेभ्य एव प्राप्यते । तज्ज्ञानं विना मनुष्यो हस्तपादादिसम्पन्नोऽपि किमपि कार्यं सम्पादयितुं न क्षमते । अतो विज्ञान-लिप्सुभिर्वृद्धाः समाश्रयणीया इति ॥ ८ ॥

**वृद्ध लोगों के उचित सेवन से विज्ञान ( नीतिदर्शनशिल्पशास्त्रादि ) की प्राप्ति होती है ॥ ८ ॥**

विज्ञानात्को लाभ इति विवक्षुराह—

## विज्ञानेनात्मानं सम्पादयेत् ॥ ९ ॥

**विज्ञानेनेति** । विज्ञानेन-शिल्पशास्त्रादेः सम्यज्ज्ञानेन, आत्मानम्-स्वम्, सम्पादयेत्-समुन्नतं कुर्यात्, सर्व एवेति शेषः । तत्तज्जीवनव्यापारेषु सिद्धिलब्धये प्रथमतस्तावदात्मनः समुन्नतिरपेक्षिता । सा च पूर्णरूपेण शास्त्रानुभवेन विना न हि सम्पादयितुं शक्यते । तस्माद् विज्ञानमाश्रित्य लोक आत्मानं विवेकसम्पत्तिपूर्णं कुर्यादित्यत्रोपदिष्टम् ॥ ९ ॥

**विज्ञान ( शास्त्र के पूर्ण ज्ञान ) से अपने को सम्पन्न ( बुद्धि-विवेक आदि से युक्त ) बनाना चाहिये ॥ ९ ॥**

आत्मोन्नतिसम्पन्नः पुरुष आत्मानं जयतीत्याह—

## सम्पादितात्मा जितात्मा भवति ॥ १० ॥

**सम्पादितात्मेति।** सम्पादितात्मा-सम्पादितः अर्थवार्ताशिल्पशास्त्रादि-जनितेन ज्ञानेन समुन्नतिं प्रापितः आत्मा येन स पुरुषः जितात्मा-जितो वशीकृत आत्मा येन तादृशः, भवति-जायये। समुन्नतात्मा पुरुषः स्वात्मनि प्रभुर्भवतीति भावः। अत्र च-सुसम्पन्नेन चेतसा किं स्यादिति पूर्वं तत्फलमन्विष्यते। सुसम्पन्नात्मनो हि फलं मनोनिग्रहः। मनोनिग्रहश्च तावत्परमोपादेयोऽस्मिञ्जगति। मनसो निग्रहेण दुःसाधनमप्यर्थं साधयितुं पारयति पुमानिति ॥ १० ॥

**बुद्धि-विवेक आदि से युक्त मनुष्य अपने ऊपर शासन करता है॥१०॥**

मनो वशीकृत्य पुरुषः किं फलं लभत इति कथयति—

## जितात्मा सर्वार्थैः संयुज्यते ॥ ११ ॥

**जितात्मेति।** जितात्मा-जितो वशीकृत आत्मा चेतो येन सः पुरुषः, सर्वार्थैः-सर्वैर्निखिलैः अर्थैः साधनैः, संयुज्यते-संयुक्तो भवति। सर्वकार्यसाधनानां प्राप्तिर्वश्यात्मनां सुलभेत्यर्थः। सर्वेषु व्यापारेषु सिद्धिलब्धये कानिचित् साधनान्यपेक्ष्यन्ते। तानि साधनानि पुनर्नाऽस्थिरचेतसा लभ्यानि। चेतो वशीकृत्यैव पुरुषः सर्वसाधनसम्पन्नो जायत इति तदर्थं पुरुषेण जितात्मना भवितव्यमिति भावः ॥ ११ ॥

**अपने ऊपर (मन पर) शासन करने वाला मनुष्य सभी उपयोगी साधनों से युक्त हो जाता है ॥ ११ ॥**

प्रकृतिसम्पदः कारणीभूतां स्वामिसम्पदं विवर्णयिषुराह—

## स्वामिसम्पत् प्रकृतिसम्पदं करोति ॥ १२ ॥

**स्वामिसम्पदिति।** स्वामिसम्पत्-स्वामिनो राज्ञः सम्पद् ऐश्वर्यम्, प्रकृतिसम्पदम्-प्रकृतिनां साचिवादीनां प्रजानां च सम्पदमैश्वर्यम्, करोति-जनयति, उन्नतिं नयतीत्यर्थः अयं भावः-राज्ञः सम्पत्त्या प्रकृतिसम्पद् वर्धते। राजा सकलैश्वर्यसम्भृतः सन् प्रकृतीस्तथा कर्तुं प्रभवति। कोषबलहीने राजनि किमप्युपकर्तुमक्षमे नूनं प्रकृतयोऽप्यकिञ्चनाः स्युः। अतो राजकीयमैश्वर्यं प्रकृतीनामैश्वर्यं जनयतीति सुस्पष्टमेव ॥ १२ ॥

**राजा का ऐश्वर्य मन्त्री तथा प्रजा के ऐश्वर्य को बढ़ाता है ॥१२॥**

प्रकृतिसम्पदो गुणोत्कर्षमाह—

## प्रकृतिसम्पदा ह्यनायकमपि राज्यं नीयते ॥१३॥

**प्रकृतिसम्पदेति** । हि—यतः निःसंशयं वा, प्रकृतिसम्पदा प्रकृतिनामैश्वर्येण, अनायकम् अपि–नायकेन शासकेन राज्ञा हीनमपि, राज्यम्–राष्ट्रम्, नीयते शास्यते सञ्चाल्यत इति यावत् । सम्पन्नाः प्रकृतयो राज्ञा विरहितेऽपि राज्ये स्वयं शासनं कर्तुं प्रभवन्ति । शासकेन विनाकृताभिः प्रकृतिभिरैश्वर्यमन्तरेण शासनमुचितं कर्तुमक्षमाभिर्दुरवस्थैव नूनमनुभाव्या । सम्पद्विहीनाः किमपि कर्तुं नालम्, किं पुना राज्यं शासितुम् । अतोऽनायकं राज्यं नेतुं प्रकृतिसम्पत् सुतरां प्रयोजिकेति ॥ १३ ॥

**मन्त्री तथा प्रजा के ऐश्वर्य से राजा के बिना भी राज्य चलाया जा सकता है ॥ १३ ॥**

प्रकृतीनां कोपः सर्वतोऽधिक इत्याह—

## प्रकृतिकोपः सर्वकोपेभ्यो गरीयान् ॥ १४ ॥

**प्रकृतिकोप** इति । प्रकृतिकोपः–प्रकृतीनां सचिवप्रभृतीनां सर्वेषां कोपः अप्रसन्नता, सर्वकोपेभ्यः–सर्वेभ्यो दैवादिदोषेभ्यः, गरीयान् गुरुतरः विशिष्टो भवतीत्यर्थः । आनुकूल्यं सम्पाद्य राज्ञा प्रकृतयः प्रसादनीयाः । सतीषु प्रकृतिषु राज्ञोऽवस्थितिर्भवति । प्रकृतिभिः शासनीयाभिर्विना शासको राजैव कः ? ताः प्रकृतयः प्रतिकूलाचरणे राजनि कुपिताः सत्यो मूलभूतं राज्यमेवोच्छेत्तुं प्रभवेयुः । दुर्भिक्षादयो दोषा हि प्रकृतिकोपादत्यल्पा एव । दैवादिदोषाणां परिहारो हि युक्तिभिः प्रकृतिप्रियस्य राज्ञः सुकर इत्युचितमेव प्रकृतिकोपस्य सर्वतोऽभ्यधिकत्वम् । प्रकृतिकोपेन महाननर्थः सम्भवतीति भावः ॥ १४ ॥

**मन्त्री तथा प्रजा का कोप ( दैवादि ) सब दोषों से बढ़कर है॥१४॥**

राज्ञा च विनीतेन भाव्यमित्याह—

## अविनीतस्वामिभावादस्वामिभावः श्रेयान् ॥१५॥

**अविनीतस्वामिभावादिति** । अविनीतस्वामिभावात्-अविनीतस्य शिक्षाविनयाभ्यां हीनस्य स्वामिनो राज्ञो भावात् अस्तित्वात् , अस्वामिलाभः–राज्ञोऽप्राप्तिः, श्रेयान्–अतिप्रशस्तः । अविनीतः स्वीयैश्वर्यमदमत्तो राजा प्रजासुखं नापेक्षेत । अतस्तादृग्राजापेक्षया राज्ञोऽलाभ एवाधिकं श्रेष्ठः । प्रजया कामं राजहीनयैव स्थातव्यम् , किन्तु विनयविहीनो राजा नापेक्षणीयः । राज्ञा च विनयसम्पन्नेनैव भाव्यमित्याशयः ॥ १५ ॥

उद्धत अथवा अशिक्षित राजा के होने से राजा का न होना अच्छा है ॥ १५ ॥

सम्पन्नस्य राज्ञः सहायापेक्षित्वमाह—

**सम्पाद्यात्मानमन्विच्छेत् सहायान् ॥ १६ ॥**

**सम्पाद्येति** । आत्मानम्-स्वम् , सम्पाद्य-शक्तिसम्पन्नं कृत्वा, सहायान्-साहाय्यकरान् पुरुषान् , अन्विच्छेत्-अपेक्षेत सम्पादयेदित्यर्थः । पूर्वमात्मानं सर्वतः सम्पन्नं कृत्वा ततः स्वीयकार्यार्थं तद्योग्यान् सहायकान् पुरुषान् सङ्गृह्णीयात् । असम्पन्नेनाऽसहायेन च राज्ञा किं तावत्कर्तुं शक्यम् । सम्पन्नः सहायसमन्वितो हि स भूमौ सर्वार्थान् साधयितुमीष्टे ॥ १६ ॥

**अपने को सम्पन्न बनाकर ( राजा ) सहायक ढूंढे ॥ १६ ॥**

सहायः कीदृशः स्यादिति तत्स्वरूपं निर्दिशति—

**सहायः समो दुःखसुखयोः ॥ १७ ॥**

**सहाय इति** । दुःखसुखयोः-विपत्तौ सम्पत्तौ च, समः-समानरूपः, सहायः-सहायकः भवति । राज्ञा दुःखे यो दुःखी सुखे च सुखी भवति, स एव सहायो भवितुमर्हतीत्यर्थः । अन्यथा राज्ञोऽवस्थां वस्तुतो ज्ञातुमसमर्थस्तदीयं साहाय्यं किन्नाम कुर्यात् सः। सुखे सहवासिनो दुःखे च दूरवासिनः सहाया भवितुं नार्हन्ति । राजसमदुःखसुखेनैव सहायेन भाव्यमिति ॥ १७ ॥

**दुःख और सुख में समान भाव रखने वाला मनुष्य ( राजा का ) सहायक हो सकता है ॥ १७ ॥**

असहायस्य राज्ञः कार्यहानिं दर्शयति—

**नाऽसहायस्य मन्त्रनिश्चयः ॥ १८ ॥**

**नाऽसहायस्येति** । असहायस्य-कमपि सहायकं विना तिष्ठतो राज्ञः, मन्त्रनिश्चयः-मन्त्रस्य सुगूढराजकीयकार्याकार्यविशेषस्य निश्चयो निर्णयः, न भवति । राजा हि कमपि सचिवादिकं बुद्धिमन्तं स्वीयकार्येषु समुचितविचारकर्तारं सहायकं कृत्वैव कार्याकार्यविशेषं निर्णेतुं प्रभवति । सचिवादिसाहाय्यं विना केवलो राजा कस्यापि गूढार्थस्य समीचीनं निर्णयं कर्तुं न क्षमो भवतीत्यसहायस्य राज्ञः प्रधानकार्यासिद्धिर्दर्शिता ॥ १८ ॥

**सहायक के बिना राजा को गुप्त विचार का निश्चय नहीं होता १८**

असहाय एकाकी राजा मन्त्रनिश्चयं कर्तुं न शक्नोतीति पूर्वोक्तमर्थमुदाहरणेन द्रढयति—

**नैकं चक्रं परिभ्रमति ॥ १९ ॥**

**नैकमिति** । एकम्-एकसंख्याकम्, चक्रम्-रथाङ्गं रथचालनकारणीभूतम्, न परिभ्रमति-न समन्ततो भ्राम्यति । अयं भावः-रथे चक्रद्वयं संयुज्यते । तेनैव रथश्चाल्यते । तत्रैकं चक्रं यथा न भ्रमति, अपि तु चक्रद्वयं सहैव भ्रमद् दृश्यते, तथैव नृपतिरेको गूढार्थनिर्णये न प्रभुः । सचिवादिसमन्वितस्यैव च तस्य तत्कार्यानुकूला शक्तिरस्तीति ॥ १९ ॥

**( रथ का ) अकेला पहिया नहीं घूमता ॥ १९ ॥**

मन्त्रणोचित राज्ञो गुणद्वयं प्रदर्शयन् सूत्रकारो 'मन्त्रकार्ये स्वयं राजापि साहचर्यं कुर्या' दित्याशयेनाह—

**मानी प्रतिपत्तिमानात्मद्वितीयं मन्त्रिणमुत्पादयेत् २०**

**मानीति** । मानी-मान आत्माभिमानोऽस्यास्तीत्येतादृशः, प्रतिपत्तिमान्-प्रतिपत्तिर्ज्ञानं शास्त्रविज्ञानमिति यावत् तदस्यास्तीत्येतादृशो राजा, आत्मद्वितीयम्-आत्मनः स्वस्य सकाशाद् द्वितीयम्, अथ वा आत्मा स्वयमेव द्वितीयो विचारकर्ता यस्य तादृशम्, मन्त्रिणम्-सचिवम्, उत्पादयेत्-कुर्यात् । 'अहं कोऽस्मि, कीदृशं मे कर्तव्य' मित्येवमात्माभिमानसम्पन्नः शास्त्रविज्ञानशाली च भवन् भूपालः स्वयं मन्त्रविचारे साहाय्यं कुर्वन् मन्त्रिणं सम्पादयेत् । तथा चोक्तम्-'आत्मना द्वितीयेन मन्त्रः कार्यो महीभृता' इति । राजा मन्त्री चेति द्वाभ्यामेव गुप्तविचारः कर्तव्यस्तत्र नापेक्षा तृतीयस्येति भावः ॥ २० ॥

**आत्माभिमान तथा विज्ञान से सम्पन्न राजा मन्त्रकार्य में सहायक एक अपने स्वयं रहकर दूसरा सहायक मन्त्री को बनावे ॥ २० ॥**

गूढकार्याकार्यविचारणे सहायकं कमपि मन्त्रिणं नृपतिः कुर्यादिति पूर्वसूत्रोक्तार्थमनुसृत्य 'कीदृशो मन्त्री करणीय' इत्याह—

**अविनीतं स्नेहमात्रेण न मन्त्रे कुर्वीत ॥ २१ ॥**

**अविनीतमिति** । अविनीतम्-विद्याविनयवर्जितमनुरागरहितं च मन्त्रिणम्, स्नेहमात्रेण-पूर्वपरिचयोद्भूतानुरागस्मरणमात्रेण, मन्त्रे-गुप्तविचारकार्ये, न कुर्वीत-न नियोजयेत् । 'असौ मम बाल्यात्प्रभृति सहचरोऽतो मम स्नेहपात्र' मिति

कृत्वा तमविनीतं मन्त्रिणं राष्ट्रोन्नतिरक्षणोपायविमर्शे न स्थापयेद्राजेति भावः। युक्ताऽयुक्तविवेकसम्पन्न एव राजा स्वकीयं राज्यं सम्यङ्नियन्तुं समर्थः। युक्तायुक्तविवेकश्च पुनर्बुद्धिमता स्वार्थरहितेन स्वामिभक्तेन मन्त्रिणैव राज्ञः पुरस्तादुपस्थाप्यते। स्ववं विवेकरहितः सचिवो राजानं कथं विवेकं शिक्षयेत्। तेन सहायभूतेन राजा क्षिप्रमेव स्वकार्यं विघातयेत्। 'ननु यदि सोऽपार्थकस्तर्हि कथं सर्वथैव न त्याज्यः?' इत्येवं न शङ्क्यम्। यतश्चिरपरिचिततत्वात्किञ्चिद्रहस्यं जानात्येवासौ। सर्वथा त्यक्तः शत्रुतां भजमानो रहस्यमुद्घाटयन् हानिकारक एव स्यात्। अतोऽविनीतं सचिवं सद्व्यवहारमात्रेण पालयेन्न तं रहस्ये नियोजयेदित्युपदिष्टं भवति २१

**विद्या और विनय से रहित मनुष्य को केवल पुत्र स्नेह के कारण गुप्त मन्त्रणा में सम्मिलित नहीं करना चाहिये ॥ २१ ॥**

अधुना मन्त्रोपयोगितां निरूपयति—

## मन्त्रमूलाः सर्वारम्भाः ॥ २२ ॥

**मन्त्रमूला इति।** सर्वारम्भाः—सर्वे आरम्भाः आरम्भमाणानि कार्याणि, मन्त्रमूलाः—मन्त्रो बिचारो मूलं निदानभूतो येषाम्, तथा भवन्ति। अयमाशयः—किञ्चिदपि कार्यं सम्पादयितुं प्रथमं तावत्तदुचितोपायचिन्तनमपेक्षितम्। तेनैव सर्वेषां कार्याणां सिद्धिर्भवति। अविवेककृतं कार्यं पश्चात्तापं जनयति। यथोक्तं **भारविणा**—'सहसा विदधीत न क्रिया' मिति ॥ २२ ॥

**सब कार्यों के आरम्भ में गुप्त विचार करना आवश्यक है ॥ २२ ॥**

कार्यसिद्धये मन्त्रो गोपनीय इत्येतदुपक्षिपन्नाह—

## मन्त्रसंवरणे कार्यसिद्धिर्भवति ॥ २३ ॥

**मन्त्रसंवरणे इति।** मन्त्रसंवरणे—मन्त्रस्य संवरणे गोपने, कार्यसिद्धिः कार्याणां कर्मणां सिद्धिर्निष्पत्तिः, भवति सञ्जायते। मन्त्रगोपनेन कार्यं सफलं भवतीत्यर्थः। कार्योपायचिन्तनं प्रकाशमानीतमन्येषामीर्ष्याद्वेषादिसमुत्थापनेन कार्यसिद्धिं विघातयति। ततस्तत् सिद्धिं यावद्गोपनीयमवश्यं भवति। कृत्यैव तत्कार्यसमये प्रकाशं लभेत, न तु तत्र पूर्वं वक्तुं किमप्यावश्यकम्। कथितं सत् तत्कार्यसाफल्यं न गच्छेदिति भावः ॥ २३ ॥

**मन्त्र के गुप्त रखने से कार्यों की सिद्धि होती है ॥ २३ ॥**

मन्त्रप्रकाशनं सर्वनाशायेत्याह—

## मन्त्रनिस्रावः सर्वं विनाशयति ॥ २४ ॥

**मन्त्रनिस्राव इति ।** मन्त्रनिस्रावः–मन्त्रस्य गुप्तविचारस्य निस्राव इतस्ततः प्रसरणं प्रकाशनमिति यावत्, सर्वम्—सकलं मन्त्रितं कार्यम्, विनाशयति विघातयति । मन्त्रप्रकाशनात्सकलं तत्कार्यं विनश्यतीति भावः । प्रकाशिते हि मन्त्रे तज्ज्ञानेन परैरुत्पादिते तत्र विघ्ने कार्यस्य नाशः सर्वतोऽवश्यं भावी, कीदृशीपुनस्तत्र कार्यसिद्धेराशा ॥ २४ ॥

**मन्त्र का प्रकाशित होना सब काम को बिगाड़ देता है ॥ २४ ॥**

मन्त्रप्रकाशनाद्भविष्यन्तीमन्यामपि हानिं दर्शयति—

## प्रमादाद् द्विषतां वशमुपयास्यति ॥ २५ ॥

**प्रमादादिति ।** प्रमादात्–अनवधानतायाः कारणात्, द्विषताम्–शत्रूणाम्, वशमुपयास्यति–वशंवदो भविष्यति, अर्थाद्राजा । मन्त्रगोपने भूयोऽवधानं देयम् । मन्त्रप्रकाशनं तावत्प्रमादादेव सञ्जायते । एतत्प्रमादसत्त्वेन शत्रवो मन्त्रितमर्थं बुद्ध्वा तत्कार्यविनाशोपायं च कृत्वा राजानमाक्रम्य वशीकरिष्यन्ति । स च तैः शत्रुभिर्वशीकृतो राजा कष्टमेवानुभविष्यतीति भावः ॥ २५ ॥

**असावधानी के कारण मन्त्र के प्रकाशित होने से ( राजा ) शत्रुओं के वश में हो जाता है ॥ २५ ॥**

सर्वं मन्त्रं रक्षणीयं प्रतिपादयति—

## सर्वद्वारेभ्यो मन्त्रो रक्षितव्यः ॥ २६ ॥

**सर्वद्वारेभ्य इति ।** सर्वद्वारेभ्यः—प्रमादादिभ्यः सकलेभ्यो मन्त्रप्रकाशनकारणेभ्यः, मन्त्रः–गुप्तविचारः, रक्षितव्यः–पालनीयो गोपनीय इति यावत् । इदमत्रावगन्तव्यम्–द्वारान्निर्गमनं भवति । मन्त्रप्रकाशनं च राज्ञो मन्त्रिणः सकाशान्मन्त्रस्य निर्गमनमेव । मन्त्रप्रकाशने कारणानि यानि प्रमादादीनि सम्भवन्ति, तानि तद्द्वाराण्येव कथ्यन्ते । तेभ्यश्च मन्त्रस्य रक्षणमत्रोपदिश्यते । प्रमादादिभ्यो मन्त्ररक्षणस्योपदेशेनात्र प्रमादाद्यभावैर्मन्त्रः सुरक्षितो भवतीति गूढं सूचितम् २६

**( प्रमादादिक मन्त्र प्रकाशन के ) सब कारणों से मन्त्र का, रक्षण करना चाहिये ॥ २६ ॥**

मन्त्ररक्षणाद्भावि फलं सूचयति—

## मन्त्रसम्पदा हि राज्यं विवर्धते ॥ २७ ॥

**मन्त्रसम्पदेति ।** हि–यतः मन्त्रसम्पदा–मन्त्रस्य सम्पदा वैभवेन, राज्यम्–

राष्ट्रम्, विवर्धते—विशेषेणोन्नतिं प्राप्नोति। मन्त्रस्य स्थिरीकरणं रक्षणमेवात्र मन्त्रसम्पत्। मन्त्रे रक्षिते सति निर्विघ्नं राष्ट्राभ्युदयकारणानि मन्त्रितानि कार्याणि सिद्धिं गच्छन्ति। ततश्चाऽऽफलोदयं मन्त्रस्य गोपनाद् राज्योन्नतिरूपा कार्यसिद्धिः स्पष्टैव। अरक्षितो हि मन्त्रः प्रकाशं गतो राज्योन्नतेः प्रतिबन्धायैव भवतीति ॥ २७ ॥

**मन्त्र की सम्पत्ति ( मन्त्रगोपन ) से राज्य की उन्नति होती है ॥**

इत्थमत्र बहुभिः प्रकारैर्मन्त्रस्य गोपनमावश्यकमुपदिश्य परेषां नीतिकाराणां मतेनापि तदीयं श्रेष्ठत्वं प्रतिजानीते—

## श्रेष्ठतमां मन्त्रगुप्तिमाहुः ॥ २८ ॥

**श्रेष्ठतमामिति।** मन्त्रगुप्तिम्-गुप्तविचारस्य रक्षणमप्रकाशनम्, श्रेष्ठतमाम्—अतिप्रशस्ताम्, आहुः—कथयन्ति, अन्ये नीतिकारा इति शेषः। इतरैर्नीतिकारैरपि पूर्वापरपर्यालोचनया मन्त्रगोपनस्य सुतरां श्रेष्ठत्वं प्रतिपादितम्। तदेवात्र ग्रन्थकारेण स्वमते प्रमाणितम् ॥ २८ ॥

**(दूसरे नीतिकार भी) मन्त्र के गोपन को अत्यन्त श्रेष्ठ कहते हैं॥२८॥**

इदानीं मन्त्रस्य स्वरूपं निरूपयति—

## कार्याकार्यप्रदीपो मन्त्रः ॥ २९ ॥

**कार्याकार्यप्रदीप इति।** मन्त्रः—गुप्तविचारः, कार्याकार्यप्रदीपः—करणीयाऽकरणीयविषययोः प्रकाशकः भवति। 'किं कर्तव्यं किञ्चाकर्तव्यम्' इति येन प्रकाश्यते, स तावन्मत्र उच्यते। कार्याकार्ययोः प्रकाशनं चात्र तद्विषयको विचार एव अतः कार्याकार्यविचारं मन्त्रपदेन व्यवहरन्तीत्यर्थः ॥ २६ ॥

**'क्या करना चाहिये और क्या नहीं करना चाहिये' इस बात को बतलाने वाला मन्त्र होता है ॥ २९ ॥**

द्वेषभावं दूरीकृत्य मन्त्रं कुर्यादित्युपदेशानुसारं ब्रूते—

## मन्त्रकाले न मत्सरः कर्तव्यः ॥ ३० ॥

**मन्त्रकाल इति।** मन्त्रकाले—कार्याकार्यविचारावसरे, मत्सरः—अन्यशुभद्वेषः न कर्तव्यः-नाचरणीयः। अयं भावः-परोत्कर्षासहिष्णुतैव मत्सर उच्यते। विचारकाले यदि परेषां कल्याणाभिलाषश्चित्ते न स्यात्तर्हि समीचीनो न स्यात् कृतः स विचारः। अतो मन्त्रं कुर्वन् परेषां शुभस्य विद्वेषं न कुर्यात्। मन्त्रणावसरे परेषामशुभं न चिन्तनीयं, परहितभावनयैव मन्त्रणीयमिति भावः ॥ ३० ॥

कार्याकार्य का विचार करते समय दूसरों के हित का विरोध नहीं करना चाहिये ॥ ३० ॥

शत्रोः कस्याप्यन्यस्य वा दोषाणां ज्ञानं मन्त्रेण भवतीति प्रतिपादयति—

**मन्त्रचक्षुषा परच्छिद्राण्यवलोकयन्ति ॥ ३१ ॥**

**मन्त्रचक्षुषेति** । मन्त्रचक्षुषा–मन्त्र एव चक्षुर्नेत्रं तेन, परच्छिद्राणि–परेषामन्येषां छिद्राणि दोषान्, अवलोकयन्ति–पश्यन्ति जानन्तीति यावत्। नेत्रस्य कार्यं दर्शनम्। मन्त्ररूपेण नेत्रेण परदोषाणां दर्शनं भवतीत्यर्थः। अन्यैः कृतानामनुचितकर्मणां परिज्ञानं मन्त्रेणैव राज्ञां भवति, नान्यः कोऽपि तथाविधस्तत्परिज्ञानोपाय इति भावः ॥ ३१ ॥

**मन्त्ररूपी नेत्र से ( राजा ) दूसरों के दोषों को जान लेते हैं ॥३१॥**

षट् कर्णान् गतः अर्थात् त्रिभिः कृतो मन्त्रः सुरक्षितो न तिष्ठतीत्याह—

**षट्कर्णो मन्त्रश्छिद्यते ॥ ३२ ॥**

**षट्कर्ण इति** । षट्कर्णः-षट् कर्णा अर्थात् त्रयो मनुष्या यत्र सः, मन्त्रः गुप्तविचारः, छिद्यते–भिद्यते भिन्नो भवति । त्रिभिः कृतो मन्त्रः प्रकाशरूपतां गच्छतीत्यर्थः । अत्रेदं रहस्यम्–राजानं मन्त्रमप्रकाशयन् मन्त्री शासकस्य राज्ञोऽनुमतिं विना किं नाम कर्तुं शक्नोति ? राज्ञः सङ्गोप्य स्वेच्छयैव कथञ्चित्किञ्चित् कदाचित् कुर्वन् स मन्त्रिणामधमः कथ्यते । अतो मन्त्रणाकार्ये राज्ञः समावेशोऽनिवार्यः । अथ पुनस्तृतीयस्यापि कस्यचित् समावेशः केनापि कारणेन तत्र क्रियते तदा, चतुर्थस्य कुतो नेत्यनवस्था स्यात् । अन्यच्च-द्वाभ्यां राज्ञा मन्त्रिणा च कृतो विचारो 'यथायं मामेव नान्यं कथयति तथाऽहममुमेव कथयिष्यामि नान्यम्' इति परस्परभावनया तत्रैवोभयत्र तिष्ठेत्, न ताभ्यां स विचारः कुत्रचित्प्रकाश्येत । इतः परं तत्र यस्तृतीयादिकः सम्मिलितो भवेत, स च 'यथास्माभिरयं विषयो ज्ञातस्तथान्येऽपि कुतो न जानीयु'रित्येवं विचारयन् तदितरत्रापि तं विषयं कदाचित्प्रकाशयेत् । तेन मन्त्रगोपनरूपं मूलमेव व्याहन्येत । अतो नीतिः साध्वेव सूचयति—'षट्कर्णो भिद्यते मन्त्र' इति ॥ ३२ ॥

**छः कान में गया हुआ अर्थात् तीन मनुष्यों का किया हुआ मन्त्र फूट जाता है ॥ ३२ ॥**

त्रिभिः कृते मन्त्रे सम्भवद् दूषणमप्याह—

**त्रयाणामैकवाक्येऽसम्प्रत्ययः ॥ ३३ ॥**

**त्रयाणामिति** । त्रयाणाम्–मन्त्रणावसरे मन्त्रं कुर्वतां त्रित्वविशिष्टानां पुरुषाणाम् , ऐकवाक्ये = एकवाक्यतायाम् ऐकमत्य इति यावत् , असम्प्रत्ययः–अविश्वासः भवति । अयं भावः–"द्वाभ्यामेव मन्त्रयितव्यम् , रहस्योद्घटनाभिया तृतीयस्तत्र मन्त्रणे न समावेशनीय इत्येवं तावत्पूर्वसूत्रे सिद्धान्तितम् । इत्थं सत्यपि कथञ्चित् सम्मिलितास्त्रयो मन्त्रयेयुस्तर्हि तेषां त्रयाणां तदानीमेकवाक्यता भवेन्नवेति सन्देहास्पदमेव । परस्परं विवदमानेषु तेषु सर्वेषामेकमेव सम्मतं भवेदित्यत्र यदि विश्वासो नास्ति तर्हि कस्यापि निर्णयस्य तत्र वार्तैव का ? उच्यते च लोके–"त्रिकं विकट"मिति ।

इदं च सूत्रं नूतनोपलब्धपुस्तकेषु 'त्रयाणामेकवाक्ये सम्प्रत्यय' इत्येवमुपलब्धम् । प्रकृते विरुद्ध एव पाठो न सङ्गच्छते । अस्य व्याख्यानकौशलं दर्शयन्तो नूतनाः सर्वेऽपि टीकाकृतो यत्किञ्चित्प्रलपन्तो भ्रान्ता एव । अस्माभिस्तु विचारपुरःसरं तत्र 'असंप्रत्यय' इत्यकारप्रश्लेषात्पूर्वसूत्रानुसरणेन सोऽर्थः सङ्गतिं नीतः । निपुणमेतन्निरूपणीयं प्राज्ञैरित्यलम् ॥ ३३ ॥

**तीनों की एकवाक्यता (एक मत) होने में विश्वास नहीं होता ॥३३॥**

इदानीं मन्त्रिणो लक्षणमाह—

## अकामबुद्धयो मन्त्रतत्त्वार्थदर्शिनो मन्त्रिणः ॥ ३४ ॥

**अकामबुद्धय इति** । अकामबुद्धयः–निरपेक्षबुद्धयः, मन्त्रतत्त्वार्थदर्शिनः–मन्त्रस्य तत्त्वार्थं वास्तविकं सारभूतमर्थं द्रष्टुं विचारयितुं शीलं येषां तादृशाः, मन्त्रिणः–मन्त्रिपदमारूढा भवेयुः । येषां मनसि कोऽपि कीदृशोऽप्यर्थो नास्ति, ये च यथार्थरूपेण कर्तुं समर्थाः सन्ति, त एव मन्त्रिणो भवितुमर्हन्ति । पक्षपातसहिताः सापेक्षबुद्धयो मन्त्रस्य तत्त्वमजानन्तो मन्त्रिपदं प्राप्ताः सम्यङ्नयं कर्तुमपारयन्तः कार्यमेव सर्वं विघातयेयुः । अतस्तादृशा मन्त्रकार्ये वर्जनीया इति भावः ॥ ३४ ॥

**जिनकी बुद्धि में कोई अपेक्षा (इच्छा) न हो और जो मन्त्र का यथार्थ रूप जानने में समर्थ हों, वे ही मन्त्री होने योग्य हैं ॥ ३४ ॥**

बलार्थिनो राज्ञः कर्तव्यतया वक्ष्यमाणे मित्रसङ्ग्रहे 'मित्रं कीदृशं स्या'दित्येतन्निरूपयति—

## आपत्सु स्नेहयुक्तं मित्रम् ॥ ३५ ॥

**आपत्स्विति** । आपत्सु–शत्रुकृतदैविकाद्यासु विपत्तिषु सतीषु, मित्रम्–सुहृ-

त्, स्नेहयुक्तम्-स्नेहभावेन समन्वितं भवेत्। सम्पत्तिसमये किल स्वार्थपरवशाः परेऽपि मित्रभावं दर्शयन्ति, परं विपत्तिसमये यः किल स्नेहभावं पूर्ववत् प्रकटयति, स एव मित्रपदवीं वस्तुतः प्राप्नोति। आपत्तिरेव मित्रस्य परीक्षाया निकषोपलः। तत्र स्नेहं त्यजन्मित्रं न भवतीत्यर्थः॥ ३५॥

**विपत्ति के समय मित्र को स्नेहयुक्त होना चाहिये॥ ३५॥**

आपदि स्नेहसंयुक्तानां मित्राणां सङ्ग्रहे को लाभ इति निर्दिशति—

## मित्रसङ्ग्रहणे बलं सम्पद्यते॥ ३६॥

**मित्रसङ्ग्रहण इति।** मित्रसङ्ग्रहणे—मित्राणां सुहृदां सङ्ग्रहणे प्राप्तिकर्मणि, बलम्-शक्तिः, सम्पद्यते—संवर्धते। शक्तिस्तावत्त्रिविधा-प्रभुमन्त्रोत्साहरूपेति। अयमाशयः-अनन्यभावानां स्निग्धानां कर्तव्यशीलानां समर्थानां मित्राणां साहाय्येन दुर्बलोऽपि राजा बलवान् भवति। प्रबलो हि सर्वकर्मणि समर्थः। अतो भूतिमिच्छता राज्ञा सन्मित्रसङ्ग्रहः कर्तव्य इत्युपदिष्टं भवति॥ ३६॥

**मित्र का सङ्ग्रह करने से बल बढ़ता है॥ ३६॥**

बलयुक्तः किं कुर्यादित्याह—

## बलवान् अलब्धलाभे प्रयतेत॥ ३७॥

**बलवानिति।** बलवान्-शक्तिसम्पन्नो राजा, अलब्धलाभे—अलब्धस्याऽनधिगतस्यार्थस्य लाभेऽर्जने, प्रयतेत-सयत्नो भवेत्। अलब्धमर्थं लब्ध्वा बलं सार्थकं कुर्यादिति भावः। अयमाशयः-शक्तिसम्पन्नेन राज्ञा स्वतेजसा रिपूनाक्रम्य वशीकृत्य च तेषां राज्यं प्राप्तुं सयत्नेन भाव्यम्। अयमेव राज्ञोऽलब्धलाभः। अलब्धं पराधिकारे स्थितं राज्यं स्वायत्तं कर्तुमेव बलस्योपयोगः॥ ३७॥

**बलवान् राजा को अप्राप्त की प्राप्ति के लिये यत्न करना चाहिये ३७**

अप्राप्तप्राप्तावनधिकारिणं वर्णयति—

## अलब्धलाभो नालसस्य॥ ३८॥

**अलब्धलाभ इति।** अलसस्य—कार्यमकुर्वतो मन्दस्य, अलब्धलाभः-अप्राप्तवस्तुनः प्राप्तिः, न भवति। 'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः'-रित्यालस्यरूपे महति शत्रावतिसन्निकृष्टे सत्यलब्धलाभे न कदाचिदपि प्रभू राजा। तस्मात्सर्वप्रयत्नविघातकमालस्यं स्तोकमपि न समाश्रयणीयं भूतिमिच्छता राज्ञा-जनेन वेति॥ ३८॥

**आलसी को अप्राप्त वस्तु की प्राप्ति नहीं होती॥ ३८॥**

अलसः पुरुषो दैवाल्लब्धस्यापि रक्षणेऽसमर्थ इति कथयति—

**अलसेन लब्धमपि रक्षितुं न शक्यते ॥ ३९ ॥**

**अलसेनेति** । अलसेन—उत्साहहीनेन मन्देन, लब्धम्—प्राप्तं राज्यादिकमपीति यावत् , रक्षितुम् , पालयितुम् , न शक्यते—न पार्यते । आलस्यं यथाऽप्राप्तं प्रापयितुं न क्षमते तथैव प्राप्तं रक्षितुमपि । 'अलब्धलाभे प्रयत्न एवान्याय्योऽतः सन्तोषवृत्तिना भवितव्यं धर्मशीलेन पुरुषेणे'ति केषाञ्चिद्वचः । युक्तेऽपि सत्येतस्मिन् वचसि स्वाधिकारगतस्य रक्षणं स्वजीवनस्य रक्षणमिवेति । तत आत्मानमपि रक्षितुमालस्यत्यागोऽपेक्षित इत्युक्तं भवति ॥ ३९ ॥

**आलसी राजा मिली हुई वस्तु की भी रक्षा नहीं कर सकता ॥३९॥**

यदि दैवादालस्ययुक्तेन लब्धं रक्षितं भवेत्तथापि वृद्धिमगच्छत् तन्न किञ्चिदुन्नतिकरमिति ब्रूते—

**न चालस्ययुक्तस्य रक्षितं विवर्धते ॥ ४० ॥**

**न चेति** । आलस्ययुक्तस्य—आलस्येन मान्द्येन युक्तस्य समन्वितस्य, रक्षितं च—पालितमपि, चकारोऽप्यर्थे, न विवर्धते—न वृद्धिं प्राप्नोति । प्रकृतीनामतिस्नेहात् पित्रादिकृतशत्रूच्छेदेन वा रक्षितमपि राज्यकोषादिकं राज्ञो मान्द्येन न कदाचिद् वृद्धिं गच्छति । अनुन्नतं च राष्ट्रमन्यराष्ट्राणामुपहासभाजनं भवति । अत आलस्यं त्यक्त्वैव राजा समुन्नतिं प्राप्तुं शक्नोतीत्येतावदर्थज्ञानमत्र ॥ ४० ॥

**आलसी राजा द्वारा रक्षित होने पर भी ( राज्य-कोषादि की ) वृद्धि नहीं होती ॥ ४० ॥**

अलसस्य भृत्यपोषणशक्तेरप्यभावं वक्ति—

**न भृत्यान् पोषयति ॥ ४१ ॥**

**न भृत्यानिति** । भृत्यान्—सेवकान् , न पोषयति—न पालयति यथोचितरूपेणेति यावत् । स्वमपि रक्षितुमसमर्थो योऽलसः, स किल कथं परान् भृत्यान् पोषणद्वारा रक्षितुं क्षमतामिति भावः । इदं तात्पर्यम्—अपोषिता भृत्या असन्तुष्टा भूत्वा कार्यहानिं कुर्युरन्यं कञ्चित्पोषयितारं राजानं समाश्रयेयुर्वा । अयोग्या अलसा एव भृत्यास्तत्सेवने चिरप्रवृत्ताः स्युः । अयोग्यपरिवृतश्चामी सदा दुःखी स्यात् । अत आलस्यं त्यक्त्वा कोषादिकं वर्धयित्वा च राजा सुभृत्यानां सम्यक् पोषणे समर्थो भवेदित्युपदिष्टं भवति ॥ ४१ ॥

( वह ) नौकरों का पोषण नहीं कर सकता ॥ ४१ ॥

आलस्ययुक्तो राजास्मिंल्लोके शान्ति न प्राप्नोति, आमुष्मिक्यै शान्त्यायपि यतितुं न पारयत्यसाविति वक्ति—

**न तीर्थं प्रतिपादयति ॥ ४२ ॥**

**न तीर्थमिति** । अलसो राजा, तीर्थम्-काश्यादिस्थानम् , न प्रतिपादयति-न साधयति । तीर्थाटनेऽपि न समर्थोऽलस इति भावः । अयमाशयः-शास्त्राध्वर-विद्यासदनभूतानि तानि तानि प्रसिद्धानि पुण्यक्षेत्राण्युपगम्यैव सत्सङ्गतिर्लभ्यते । सत्सङ्गतिरेव धर्मानुरागं जनयति वर्धयति च । तीर्थाटनद्वारा वृद्धिं गतेन धर्मा-ऽनुरागेण परमा शान्तिरधिगन्तुं शक्या । अतस्तीर्थयात्रासम्पादनाय मान्द्यं त्याज्यमेवेति स्पष्टमुक्तं भवति ॥ ४२ ॥

**आलसी राजा तीर्थयात्रा भी नहीं कर सकता ॥ ४२ ॥**

राज्यतन्त्रस्वरूपमधुना निर्दिशति—

**अलब्धलाभादिचतुष्टयं राजतन्त्रम् ॥ ४३ ॥**

**अलब्धलाभादिचतुष्टयमिति** । अलब्धलाभादिचतुष्टयम्—अलब्धलाभ आदौ येषां तेषां चतुष्टयं चतुःसंख्यापरिमितिः, राज्यतन्त्रम्—राज्यस्य राष्ट्रस्य तन्त्रं सिद्धान्तोऽस्ति । पूर्वोक्तविषया राज्यसिद्धान्तस्वरूपं चतुर्विधम् तथथा—अलब्धस्य लाभ , लब्धस्य संरक्षणम् , रक्षितस्य संवर्धनम् , संवर्धितस्य सम्यक् प्रयोगश्चेति । एत एव चत्वारोऽर्था राज्यसिद्धान्तपदेन व्यवह्रियन्ते । अयमाशयः-मूलभूतमेतच्चतुष्टयमाश्रित्यैव राजा राज्यं सञ्चालयितुं समर्थः । एतेषां स्वरूपोप-योगिते तु प्रागुक्ते एव ॥ ४३ ॥

**अप्राप्त को प्राप्ति आदि-अप्राप्त की प्राप्ति, प्राप्त की रक्षा, रक्षित की वृद्धि तथा बधित का सत्प्रयोग-यही चार राज्य के सिद्धान्त हैं ॥४३॥**

राज्यतन्त्रमनुसृत्यैव नीतिशास्त्रं प्रवर्तत इत्याह—

**राज्यतन्त्रायत्तं नीतिशास्त्रम् ॥ ४४ ॥**

**राज्यतन्त्रायत्तमिति** । राज्यतन्त्रायत्तम्—पूर्वोक्तराज्यतन्त्राणाम् आयत्त-मधीनम् , नीतिशास्त्रं भवति । निखिलं नीतिशास्त्रं पूर्वोक्तान् सिद्धान्तानेवाश्रि-त्य प्रवर्तते । तेषां विमर्श एव नीतिशास्त्रविषयः खलु । अतो नीतिशास्त्रजिज्ञासुना पर्यायेण चत्वारः सिद्धान्ता अनुसरणीया इत्युक्तं भवति ॥ ४४ ॥

**राज्य के मूल सिद्धान्तों के आधार पर ही नीतिशास्त्र चलता है ॥**

पुनश्च किं फलं राज्यतन्त्रस्येति वक्ति—

**राज्यतन्त्रेष्वायत्तौ मन्त्रावापौ ॥ ४५ ॥**

राज्यतन्त्रेष्विति। राज्यतन्त्रेषु—राज्यतन्त्राणामेव, आयत्तौ—अधीनौ, मन्त्रावापौ भवतः। रहसि युक्तायुक्तविमर्शो मन्त्रः, परराष्ट्रचिन्तनम् आवापः। राज्यतन्त्राण्येवाश्रित्य मन्त्रावापौ स्फुरत इति भावः। 'मन्त्रमूलाः सर्वारम्भाः' इति मन्त्रस्योपयोगित्वं पूर्वमेव निर्दिष्टम्। परराष्ट्रचिन्ता च पुना राज्यरक्षणेऽतिहितकरी। न हि परराष्ट्रं तद्रहस्यज्ञानेन विना वशीकर्तुं शक्यते। परराज्याधिगतिरेव पुना राज्ञां महांल्लाभः। अतः स्वकीयं राज्यं रक्षितुं परकीयं राज्यमधिगन्तुं च राज्यतन्त्राणां सम्यग्ज्ञानं प्रयोगश्चावश्यको नृपस्येति स्पष्टम् ॥ ४५ ॥

**मन्त्र (गुप्त विचार) और आवाप (शत्रु के कामों को जानना) ये दोनों उपर्युक्त राज्य-सिद्धान्तों के अधीन हैं ॥ ४५ ॥**

किमाश्रित्य मन्त्रस्योपस्थितिर्भवतीत्याह—

**मन्त्रं स्वविषये कृत्येष्वायत्तम् ॥ ४६ ॥**

मन्त्रमिति। मन्त्रम्—गुप्तभाषणम, स्वविषये—स्वस्यात्मनो विषये देशे, कृत्येषु—कार्येषु कार्याणामिति यावत्, आयत्तम्—अधीनम, भवति। अत्र सूत्रे मन्त्रशब्दो मेदिनीकोषप्रामाण्येन क्लीबे प्रयुक्तः। स्वदेशवर्तिकार्यस्वरूपमनुसृत्यैव मन्त्रः प्रवर्तत इति भावः। यादृग्व्यापारः करणीयस्तादृगेव मन्त्रोऽपि समाश्रयणीयः। "मन्त्रपूर्वः सर्वोऽप्यारम्भः क्षितिपतीना"मिति शुक्रनीतिरप्यमुमेवार्थं ध्वनयति ॥ ४६ ॥

**मन्त्र अपने देश के कार्यों के अधीन होता है ॥ ४६ ॥**

पूर्वोक्तस्यावापस्य स्थितेरधिकरणं कथयति—

**आवापो मण्डले सन्निविष्टः ॥ ४७ ॥**

आवाप इति। आवापः-शत्रुविषयकचिन्तोद्भूतं तत्कार्यान्वेषणम्, मण्डले-द्वादशराजके राज्यसमूहे, सन्निविष्टः-स्थितः। आवापो मण्डले भवतीत्यर्थः। स्वदेशगतकार्याणि कर्तुं यथा सावधानतया तदुपायचिन्तनं युज्यते तथैव परराष्ट्रव्यापारान् सम्यग्ज्ञातुमपि तच्चिन्तनमावश्यकम। शत्रुकार्येषु दत्तदृष्टिरेव राजा स्वकार्येषु सफलो भवति। अतः परराष्ट्रचिन्तनरूप आवापो भूपतेरत्यावश्यक इति ॥ ४७ ॥

मण्डल ( बारह राजाओं के राज्य ) में मावाप (शत्रु के कामों का चिन्तन ) की स्थिति होती है ॥ ४७ ॥

मण्डलं सन्धिविग्रहयोः कारणमिति वक्ति—

## सन्धिविग्रहयोर्योनिर्मण्डलम् ॥ ४८ ॥

सन्धिविग्रहयोरिति । सन्धिविग्रहयोः—सन्धिः पणबन्धपुरःसरं शत्रुणा सह मैत्रीकरणम्, विग्रहोऽन्यमण्डले दाहलुण्ठनादिभिरुत्पन्नं युद्धम् , तयोर्द्वयोः, योनिः—उत्पत्तिस्थानम्, मण्डलम्, भवति । अयमाशयः-यदि शत्रुरधिकबलः तर्हि पणदानेन तोषयित्वा तेन सन्धिः क्रियते । तद्विजिगीषा वा भवेत्तर्हि समबलेनाधिकबलेन वा केनाप्यपरेण सन्धिः सम्पाद्यते । शत्रुजन्यापराधोद्भूतादमर्षाद् युद्धं भवति । एतावुभौ मण्डल एव भवत इति कथितमत्र ॥ ४५ ॥

सन्धि और विग्रह ( युद्ध ) का स्थान मण्डल है ॥ ४८ ॥

राज्ञा नीतिशास्त्रमनुसृत्यैव वर्तितव्यमिति विवक्षुराह—

## नीतिशास्त्रानुगो राजा ॥ ४९ ॥

नीतिशास्त्रानुग इति । नीतिशास्त्रानुगः—अर्थशास्त्रदण्डनीत्यादिमयी नीतिस्तत्प्रापकं शास्त्रं नीतिशास्त्रमुच्यते, तस्यानुगस्तदनुकूलकर्मकर्ता, राजा—नृपो भवेत् । नीतिशास्त्रमनुसृत्य राजा कार्येषु प्रवर्तेत । अयमाशयः—नीतिविरुद्धकर्मासक्ता बहवो वेनप्रभृतयो राजानो नष्टाः । उक्तं च युक्तिकल्पतरौ—

'नीतिहीननरेन्द्राणां विनश्यन्त्याशु सम्पदः ।
अतो नीतिः प्रयत्नेन श्रवणीया नृपोत्तमैः ॥'

इति । नीतिनैपुण्यादेव राज्यसञ्चालिकाः प्रभावोत्साहमन्त्रजास्त्रिविधाः शक्तयः प्रादुर्भवन्ति । अतः शक्तिमिच्छता राज्ञा नीतिशास्त्रानुवर्तिना भवितव्यमिति ॥४९॥

राजा को नीतिशास्त्र के अनुसार चलना चाहिये ॥ ४९ ॥

शत्रुलक्षणं वक्ति—

## अनन्तरप्रकृतिः शत्रुः ॥ ५० ॥

अनन्तरप्रकृतिरिति । अनन्तरप्रकृतिः—अनन्तराऽव्यवहिता प्रकृतिः स्थितिर्देशः इति यावत् यस्य सः, शत्रुः—शत्रुपदव्यवहार्यो भवति । अव्यवहितदेशस्य राजा स्वभावतः शत्रुतां भजत इति भावः । निजराज्यसमृद्ध्यर्थं यशोलाभाय च नृपः परराष्ट्राणि विजेतुं सयत्नो भवति । आसन्नवर्तिनोरेव राज्ययोः परस्पराभियानं

सुकरम् । अतः समीपस्थदेशस्य राजैव स्वाभाविकः शत्रुरिति कथितम् ॥ ५० ॥

अत्यन्तसमीप के देश का राजा शत्रु होता है ॥ ५० ॥

शत्रुलक्षणं प्रोच्य मित्रलक्षणं निरूपयति—

## एकान्तरितं मित्रमिष्यते ॥ ५१ ॥

एकान्तरितमिति । एकान्तरितम्—एकेन राज्येन अन्तरितम् व्यवहितम्, मित्रम्—सुहृत्, इष्यते—वाञ्छ्यते । एकराज्यव्यवहितं राजानं मित्रं कुर्यादिति भावः । अतिसन्निकृष्टो नृपः स्वभावत एव राज्यप्रसारलोभाच्छत्रुर्भवति । एक-राज्यव्यवहितोऽसौ समानशत्रुत्वादनायासेन मित्रत्वं भजते । अतः समानमेव शत्रुमुन्मूलयितु तस्मादात्मानं रक्षितुं वैकराष्ट्रव्यवहितदेशस्याधिपतिमेव मित्रं कुर्यादित्युपदिष्टमत्र ॥ ५१ ॥

( अपने देश के अतिनिकट ) एक राज्य से व्यवहित राजा को मित्र बनाना उचित है ॥ ५१ ॥

शत्रुत्वं मित्रत्वं च किमपि कारणमुद्दिश्यैव भवत इति निर्दिशति—

## हेतुतःशत्रुमित्रे भविष्यतः ॥ ५२ ॥

हेतुत इति । हेतुतः—कस्माच्चित्कारणादेव, शत्रुमित्रे—शत्रुर्वैरी मित्रं सुहृच्च भविष्यतः—भवेताम् । किञ्चित्कारणमाश्रित्यैव कश्चिद्राजा शत्रुतां मित्रतां वा भजत इत्यर्थः । 'हेतुं विना मन्दोऽपि न प्रवर्तते' इति किमपि कार्यं कर्तुं कोऽपि किञ्चि-त्फलमेव लक्ष्यीकृत्य प्रवर्तते । अपकाराच्छत्रुरुपकारान्मित्रं च जायेते इत्यर्थं जात-मत्र ॥ ५२ ॥

शत्रु और मित्र कारण से ही होते हैं ॥ ५२ ॥

हीयमानेन सह सन्धि निषेधन्नाह—

## हीयमानेन न सन्धिं कुर्वीत ॥ ५३ ॥

हीयमानेनेति हीयमानेन—क्रमशोऽवनतिं गच्छता राज्ञेति यावत्, सन्धिम्—पणदानपुरःसरं सन्धानम्, न कुर्वीत—न विदधीत । अयं भावः—अधिकबलाच्छत्रोर्भीतः कश्चिदपरं शत्रुं विजिगीषुर्वा सन् केनचित् समानबलेना-धिकबलेन वा नृपेण सह सन्धिं कुर्यात् । हीनबलेन राज्ञा सह मैत्रीकरणमपार्थक-मेव, यतस्तस्मान्न किमपि भयं न चासौ साहाय्यदाने क्षमः । तद्राज्यापहरणं च पुनरतिसुकरम् । तत्को नाम राजैवंविधो बालिशो यः स्वकीयराज्यस्याभिवृद्धा-

मुदासीनः सन् विजितप्रायस्य राज्ञो राज्यमस्वायत्तीकृत्य सन्धानाय प्रवर्तेत ! अत एव हीयमानेन सह सन्धिर्निषिद्धा नीतिकृता ॥ ५६ ॥

अनवति करते हुए राजा के साथ सन्धि नहीं करनी चाहिये॥५३॥

केन कारणेन सन्धिः क्रियत इति विवक्षुराह—

**तेजो हि सन्धानहेतुस्तदर्थिनाम् ॥ ५४ ॥**

तेजो हीति । तदर्थिनाम्-तस्य सन्धानस्य अर्थिनामिच्छुकानाम् , तेजः-बलं प्रतापो वा अन्यस्येति शेषः, हि निःसंशयम्, सन्धानहेतुः-सन्धानस्य सन्धेः हेतुः कारणं भवति । प्रताप एव हीनबलं सन्धाने प्रवर्तयतीत्यर्थः । अधिकबलाद्राज्ञः स्वकीयं राज्यमभिरक्षितुं तेन, अथ वा तच्छत्रुभूतेन केनचिदपरेण तेजस्विना नृपेण सन्धिमिच्छति न्यूनबलो राजा । उभाभ्यां सार्द्धं सन्धानस्य कारणं तयोस्तेज एव भवति । तेजसो भीतस्तदवाप्तुमिच्छन् वा नृपः सन्धिं कर्तुं प्रवर्तत इति भावः ॥ ५४ ॥

सन्धि चाहने वालों के लिये सन्धि करने का हेतु ( दूसरे राजा का ) प्रताप ही है ॥ ५४ ॥

पूर्वोक्तमर्थमुदाहरणेन पोषयति—

**नातप्तलोहं लोहेन सन्धत्ते ॥ ५५ ॥**

नातप्तलोहमिति । अतप्तलोहम्-अतप्तमग्निनाऽदग्धम् लोहं धातुविशेषः, लोहेन-लोहखण्डेन, अतप्तेनेति यावत् , न सन्धत्ते-न मिश्रीभवति । अग्निसंयोगात्तप्तयोरेव लोहयोः परस्परं सम्मेलनयोग्यत्वादिति भावः । अग्निना तप्त एव लोहो द्रवत्वमापन्नोऽपरेण तथाविधेन लोहखण्डेन संयुज्यते । अग्निरेव तयोः सन्धानकारकः । एवं तेज एव द्वौ भिन्नौ राजानौ संयोजयतीति ॥ ५५ ॥

नहीं तपाया हुआ लोहा लोहे के साथ नहीं जुटता ॥ ५५ ॥

प्रबलस्य दुर्बलेन सह युद्धं विधास्यन्नाह—

**बलवान् हीनेन विगृह्णीयात् ॥ ५६ ॥**

बलवानिति । बलवान्-शक्तिमान्, हीनेन-क्षीणबलेन सह विगृह्णीयात्-युद्धं कुर्यात् । क्षीणशक्तिना राज्ञा सह बलवान् राजा युध्येतेत्यर्थः । बलवता युद्धं सर्वथैव हानिकरम् । समानबलेनापि विग्रहो नातिलाभप्रदो जयस्यानिश्चितत्वात् । हीनबलेन समं युद्धे न कदापि पराजयस्याशङ्का, प्रत्युत तद्राज्यलाभ एव स्यात् ।

अतो हीनबलेनैव सह बलवान् युद्धं कुर्यादित्युक्तं भवति ॥ ५६ ॥

**बलवान् राजा बलहीन राजा से युद्ध करे ॥ ५६ ॥**

पूर्वोक्तमेवार्थमतिस्पष्टं चिकीर्षुराह—

**न ज्यायसा समेन वा ॥ ५७ ॥**

न ज्यायसेति। ज्यायसा—अधिकबलेन, समेन-समानबलेन वा राज्ञा 'विगृह्णीया'दिति पूर्वसूत्रेणानुवर्तनीयम्, न युध्येतेत्यर्थः। अयमभिप्रायः-अधिकबलेन सह विग्रहे सर्वथैव हानिः, पराजयस्य तत्र निश्चितत्वात्। समानबलेनापि विग्रहो हानिकर एव, यतो महतो धनस्य बलस्य च व्ययेनासौ सम्पद्यते। विजयोऽपि तत्रैकस्यानिश्चित एव। जयमेव लक्ष्यीकृत्य धनादिव्ययो युज्यते। लाभस्याशंसयैव पुरुषः कस्मिंश्चित्कर्मणि प्रवृत्तो भवति। जयस्यानिश्चितत्वे सर्वथा तदभावे वा विग्रहो नीतिविरुद्ध इति ॥ ५७ ॥

**अधिक बल-वाले अथवा समान बल-वाले से युद्ध न करें ॥५७॥**

बलिना सह युद्धं कीदृशं भवतीति दृष्टान्तेन दर्शयति—

**हस्तिनः पादयुद्धमिव बलवद्विग्रहः ॥ ५८ ॥**

हस्तिन इति। बलवद्विग्रहः—बलवता प्रबलेन राज्ञा विग्रहो युद्धम्, हस्तिनः—करिणः, पादयुद्धम्-पादेन चरणेन सह युद्धम्, इव—तेन तुल्यं भवति। अयमाशयः—यथा कठोरेण बलवता हस्तिपादेन युध्यमानो नरोऽवश्यमेव नाशमाप्नुयात्तथैव बलवताऽमर्षणेन च शत्रुणा युध्यमानस्य नृपस्य नाशोऽवश्यम्भाव्येव। अतो न कर्तव्यो विग्रह आत्मानं नाशयितुं समर्थेन बलवता रिपुणेति ॥ ५८ ॥

**बलवान् से युद्ध करना हाथी के पैर के साथ युद्ध करने के सदृश है ॥ ५८ ॥**

[पू]र्वोक्तमर्थमुदाहरणेन दर्शयति—

**आमपात्रमापेन सह विनश्यति ॥ ५९ ॥**

आमपात्रमिति। आमपात्रम्—आममपरिपक्वं पात्रं भाजनं मृण्मयमिति यावत्, आपेन—अपां समूहेन अद्भिरिति यावत्, सह—सार्धम्, वर्तमानमिति शेषः, विनश्यति नाशं प्राप्नोति। जलपूर्णमामपात्रं नश्यतीत्यर्थः। यथा जलस्य संयोगेनापरिपक्वं मृत्पात्रं क्षिप्रमेव भग्नं भवति, तथैव सर्वशक्तिसम्पन्ने प्रबले शत्रावभियानेन नातिकालेन नाशं प्राप्नोति हीनबलो नृपः। अतः स न युध्येत प्रबलेन वैरिणेति पोषितमनेनोदाहरणेन ॥ ५९ ॥

कच्ची मिट्टीका बर्तन पानी के साथ रहने से नष्ट हो जाता है॥५६॥

शत्रूणां स्वराज्याभियाने सति किं कुर्याद्राजेति वदति—

**अरिप्रयत्नमभिसमीक्ष्यात्मरक्षया वसेत् ॥६०॥**

अरिप्रयत्नमिति। अरिप्रयत्नम्-अरीणां शत्रूणां प्रयत्नमुद्योगं सेनासङ्ग्रहादिकमिति, यावत्, अभिसमीक्ष्य-सर्वतो निरीक्ष्य, आत्मरक्षया-आत्मराज्यादिरक्षापूर्वकम्, वसेत् तिष्ठेत्, राजेति शेषः। शत्रोर्बलस्य सम्यङ्निरीक्षणं कृत्वात्मरक्षोपायं चिन्तयता भवितव्यं नृपेणेति भावः। यदा कश्चिच्छत्रू राज्यमभिगच्छति विग्रहेच्छया, तदा तस्य बलं कार्यं वा सम्यग्ज्ञात्वैव तेन सह सन्धिं विग्रहं तदाश्रयणं वा यथोचितं कुर्याद्राजा। तदीयं प्रयत्नं बलं चाज्ञात्वैव सहसा मूढतया तेन सह योद्धुं नोचितम्। तथा सति पराजयस्याशङ्का स्यात्। अतः शत्रुचेष्टितस्यनिरीक्षणं कुर्वतैवात्मरक्षोपायः कर्तव्यो नृपेणेति कथितं भवति ॥ ६० ॥

**शत्रु के उद्योगका भलीभाँति निरीक्षण करके ( राजा को ) अपनी रक्षा का उपाय करते रहना चाहिये ॥ ६० ॥**

शक्तिहीनो विग्रहसन्धिप्रस्तावं विहायातिप्रबलं राजानमाश्रयेदिति वक्ति—

**शक्तिहीनो बलवन्तमाश्रयेत् ॥ ६१ ॥**

शक्तिहीन इति। शक्तिहीनः-सामर्थ्येन रहितः क्षीणो राजा, बलवन्तम्-शक्तिमन्तं भूपतिम्, आश्रयेत् अवलम्बेत। शत्रौ प्रबले सति तेन सह विग्रहः सर्वथैवाऽवाञ्छितः खलु सर्वनाशशङ्कया। सन्धिप्रस्तावमस्वीकुर्वतातिप्रबलेन तेन सह सन्धिविग्रहावुभावपि कर्तुं न युज्येते। तत्राश्रयणमेव वरं तत्र। तेनैव तस्य रक्षायाः सम्भवः। नान्यत्किञ्चिदुपायान्तरमिति ॥ ६१ ॥

**बलहीन राजा बलवान् राजा का आश्रय ले ॥ ६१ ॥**

दुर्बलाश्रयणं दुःखायेति प्रतिपादयितुं प्रक्रमते—

**दुर्बलाश्रयो हि दुःखमावहति ॥ ६२ ॥**

दुर्बलाश्रय इति। दुर्बलाश्रयः-दुर्बलस्य क्षीणबलस्य नृपस्याश्रयोऽवलम्बनम्, हि-निःसंशयम्, दुःखम्-कष्टम्, आवहति जनयति। स्वयं क्षीणबलो राजा स्वरक्षणेऽप्यसमर्थः कथं पुनराश्रितानामुपकृतौ प्रभवेत्? तदाश्रये तिष्ठन् राजा तत्साहाय्यमनवाप्य सततमेव शत्रुभ्यो भीतः स्वराज्यं रक्षितुं किमपि सुखं च लब्धुं न शक्नुयात्। तेन दुर्बलस्य नृपस्याश्रयणं नूनं दुःखकरमेवेति भावः ॥६२॥

दुर्बल का आश्रय दुखदायी होता है ॥ ६२ ॥

इयत्पर्यन्तं राज्ञोऽनुसरणीयं नीतितत्त्वमुपदिश्य सूत्रकारः साम्प्रतं लोककर्तव्य मुपदेश्यन् राजानं कथमाश्रयेदित्याह–

## अग्निवद् राजानमाश्रयेत् ॥ ६३ ॥

अग्निवदिति । राजानम्–शासकं नरेशम्, अग्निवत्–अग्निमिव, आश्रयेत्–सेवेत । अग्निर्यथा नाऽतिसमीपतो न चातिदूरतः संश्रीयते लोकैः, तथैव राजापीत्यर्थः । अतिसामीप्यादग्नेः सेवनं यथानर्थकरम्, अतिदूराच्च सेवितोऽग्निर्यथा वा व्यर्थः, तथैव राजाऽप्यतिसन्निकर्षात् सेवितोऽतिपरिचयवशात् कदाचिदनादरबुद्धिं वहेत्, अतिविप्रकर्षाच्च सेवितः कदाप्युपेक्षाभावं कलयेदिति मध्यगत्या तदीयमाश्रयणं युज्यते । राज्ञो वह्नेरिव नातिसमीपे नातिदूरे च स्थातव्यं जनैः, किन्तु किञ्चित्समीपे किञ्चिद्दूरे च स्थितिर्युक्तेति भावः ॥ ६३ ॥

अग्नि के समान ( न बहुत समीप और न बहुत दूर से ) राजा का सेवन करना चाहिये ॥ ६३ ॥

राजविरुद्धं नाचरेदित्याह—

## राज्ञः प्रतिकूलं नाचरेत् ॥ ६४ ॥

राज्ञ इति । राज्ञः-स्वामिनः, प्रतिकूलम्–विरुद्धम्, न आचरेत्–न कुर्यात् । राजकीयाज्ञा जगत्यनिवार्या भवति । आज्ञाभङ्गरूपमपराधं कुर्वन्तो दण्डनीयाः शासकेन । नापि कर्तव्यं तत्तेषां, यत् स्वामिनोऽनभिमतं विरुद्धं वा स्यात् । एवं सति ते राजद्रोहिणः स्युः । अतः सर्वथा सर्वैः सर्वात्मना राजानुसरणीयो न च प्रतिकूलाचरणैः प्रकोपनीय इति भावः ॥ ६४ ॥

राजा के विरुद्ध ( कार्य ) नहीं करना चाहिये ॥ ६४ ॥

इदानीं लोकेन कथं वर्तितव्यमित्याह—

## न देवचरितं चरेत् ॥ ६५ ॥

नेति । देवचरितम्–देवानां सुराणां चरितम् आचरणम्, न चरेत्–नाश्रयेत्, अयमर्थः–सर्वशक्तिसम्पन्नैर्देवैः यथावसरं यद्यदाचरितं तद्यदि लोकोऽप्यक्षमः कर्तुं प्रवर्तेत, तर्हि सोऽवश्यमेवोपहास्यः स्यात् । इन्द्रादीनां चरितं प्रसिद्धमेव । श्रीकृष्णलीलापि विदितैव । तादृशमाचरणं तादृशामेव शक्तिमतां शोभते । अतस्तथा ( देवचरितानुसरणं ) न कर्तव्यमित्येष गूढोपदेशः ॥ ६५ ॥

देवों का किया हुआ कार्य नहीं करना चाहिये ॥ ६५ ॥

लोकस्वरूपमधुना वर्णयति—

## नोद्धतवेशधरः स्यात् ॥ ६६ ॥

**नोद्धतवेशधर** इति । उद्धतवेशधरः–औद्धत्यसूचकम् उद्धतलोकसेवितं वा वेशं धारयन् लोकः, न स्यात्–न भवेत् । विनयाभावमसभ्यतां च दर्शयन्नुद्धतः कथ्यते । वेशश्च स्वात्मालङ्करणानां वस्त्रादीनां धारणम् । अशिक्षितैर्जनैर्यादृशं वस्त्रादीनां धारणं क्रियते, यच्च वस्त्रादिधारणं विनयाभावमसभ्यतां वा सूचयति, न तथा वस्त्रादिकं परिधातव्यम् । तथा सति तत्र पुरुषे लोकानामनादरबुद्धिरप्रियता च स्यातामिति भावः ॥ ६६ ॥

**असभ्यता को सूचित करने वाले अथवा असभ्य लोगों के वेश का ग्रहण नहीं करना चाहिये ॥ ६६**

ईर्ष्यां कुर्वन्तौ द्वौ परस्परं भेदनीयावित्याशयेनोपन्यस्यति—

## द्वयोरपीर्ष्यतोर्द्वैधीभावं कुर्वीत ॥ ६७ ॥

**द्वयोरिति** । ईर्ष्यतोः–ईर्ष्यां कुर्वतोः परस्परोन्नतीरसहमानयोरिति यावत्, द्वयोरपि–पुरुषद्वयेऽपि, द्वैधीभावम्–द्विधात्वं भेदं परस्परं सम्बन्धविच्छेदम् इति यावत्, कुर्वीत–उत्पादयेत् । इदमत्र तात्पर्यम्–केनापि कारणेन यदि कौचित् परस्परमुन्नतिं न सहेते तर्हि तदीर्ष्याद्वेषवशान्मिथः सम्बन्धशालिनावपि तौ बहुतरां मिथो हानिमेवोत्पादयेताम् । विच्छिन्नसम्बन्धौ च तथा हानिकरौ न स्याताम्, यतः संसर्गेष्वेव लाभहान्योः सम्भावना । अतः कोऽपि मध्ये स्थितः सज्जनस्तयोः परस्परमीर्ष्यां कुर्वतोर्भेदमुत्पादयेत् । तेनैव तयोः कल्याणम् । भेदे सति मिथो विरोधस्तयोर्वृद्धिं गच्छेत्, तेन च हानिरेवाधिकेति शङ्कायामेतदेवोत्तरं यद् भेदमूलको विरोधः प्रकाशमागतोऽन्तःस्थितात् सुगूढाद् विरोधाद् वरीयानेव । तादृश्यामवस्थायां द्वयोः सावधानता परस्परं साहाय्यं कुर्यादित्यलम् ॥ ६७ ॥

**ईर्ष्या ( डाह ) करने वाले दो पुरुषों का आपस में भेद ( सम्बन्ध विच्छेद ) करा देना चाहिये ॥ ६७ ॥**

व्यसनेषु लग्नस्य जनस्य राज्ञो वा न कार्यसिद्धिर्भवतीति दर्शयति—

## न व्यसनपरस्य कार्यावाप्तिः ॥ ६८ ॥

**न व्यसनपरस्येति** । व्यसनपरस्य–व्यसने लग्नस्य, व्यसनं तावत् कस्मि-

श्चिदपि कर्मण्यतिमात्रासक्तिः, कार्यावाप्तिः कार्याणां कर्मणामवाप्तिः सिद्धिः, न भवति । व्यसनलिप्तो नरो न किमपि साधयितुं समर्थ इति भावः । व्यसनासक्तः पुरुषो न क्वचिदन्यत्र निर्वृतिं लभते । कर्तव्यकार्येषूदासीन एवासौ भवति । उदासीनतया हि तानि सम्पादयितुं यत्नं कथं कुर्यात् ? यत्नेन विना न किञ्चित् सिध्यति लोके । अतः कार्यसिद्धिमिच्छता पुरुषेण व्यसनरहितेन भाव्यमिति ॥ ६८ ॥

व्यसन में लगे हुए पुरुष को कार्य का सिद्धि नहीं मिलती ॥६८॥

व्यसनासक्तस्य कार्याणामसिद्धिमुक्त्वाऽजितेन्द्रियस्यापि तथात्वमाह--

## इन्द्रियवशवर्तिनो नास्ति कार्यावाप्तिः ॥ ६९ ॥

इन्द्रियवशवर्तिन इति । इन्द्रियवशवर्तिनः--इन्द्रियाणां मनश्चक्षुःप्रभृतीनामेकादशसंख्याकानाम् , वशे तत्कर्तृके शासने वर्तितुं शीलमस्येत्येवम्भूतस्य पुरुषस्य, कार्यावाप्तिः--कार्यसिद्धिः न अस्ति--न भवति । विषयवशंवदस्य न किञ्चित् सिध्यतीति भावः । बलवन्ति दृढं प्रमाथीनि चेन्द्रियाणि भवन्ति । तानि च तेषु तेषु विषयेषु पुरुषं प्रसह्य प्रेरयन्ति । तत्तद्विषयेष्वासक्तः पुरुषो न कदापि विषयेतरानर्थान् भजते । कर्तव्येष्वनभिरुचिः सञ्जायतेऽसौ । कर्तव्यं विहायाऽकर्तव्यं कुर्वता जनेन न कदापि सिद्धिर्लभ्यते । अतो जितेन्द्रियेण भवितव्यं कार्यफललिप्सुना पुरुषेणेत्याशयः ॥ ६९ ॥

इन्द्रियों के वश में रहने वाले पुरुष के कार्य को सिद्धि नहीं होती॥६९॥

सहसा कार्ये प्रवृत्तेनापि न सिद्धिर्लभ्यत इत्याह--

## नास्ति कार्यं द्रुतप्रवृत्तस्य ॥ ७० ॥

नास्तीति । द्रुतप्रवृत्तस्य--द्रुतं शीघ्रं यथा स्यात्तथा अविचार्येति यावत् , प्रवृत्तस्य आरब्धकर्मणः पुरुषस्य, कार्यं नास्ति--कार्यफलं न भवति । अविचार्य कृतानि कर्माणि न सिद्धिं प्राप्नुवन्तीति भावः । हानिलाभादिविचारमकृत्वैव कार्ये प्रवृत्ता बालिशाः पुरुषा न फलेन युज्यन्ते । फलं तावद्दूरे तिष्ठेत् , ते बहुभिरापद्भिः समाक्रम्यन्तेऽविवेकाश्रयेण । अयमेवार्थः समुद्घोषितः श्रीभारविणा--'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' इति । अतः कार्यफलं लब्धुमिच्छन् न सहसा कार्येषु प्रवर्तेतेति ॥ ७० ॥

शीघ्रता से ( बिना विचार किये ) काम करने-वाले पुरुष का कार्य सिद्ध नहीं होता ॥ ७० ॥

मृगयासक्ति निषेधन्नाह—

**मृगयापरस्य धर्मार्थौ विनश्यतः ॥ ७१ ॥**

**मृगयापरस्येति ।** मृगयापरस्य—आखेटासक्तस्य, मृगया तावाद् वन्यपशूनां क्रीडया हननम् , धर्मार्थौ—धर्मश्चार्थश्च, विनश्यतः—विशेषेण नश्यतः । मृगयासक्तिर्धर्मार्थौ नाशयतीति भावः । हिंस्राणां वन्यपशूनामवधादनं नानुचितम् । यतो व्याघ्रादयो हिंस्राः पशवो जनान् भृशं पीडयन्ति, तेषां हननं प्रजारक्षणमेवातो नानुचितम् । किन्तु तत्र कर्तव्यभावोऽपेक्षितः । यदि तेषां हननेन राजा क्रीडासुखं लभते तर्हि नोचितमेव तत् , कार्कश्यवृत्तिजनकत्वात् । कार्कश्यवृत्तिरसौ दयास्नेहादिभिर्धर्मप्राणभूतैर्गुणविरहितो भवेत् । एभिर्गुणैर्वियुक्तो राजा न कदापि प्रजावत्सलः स्यात् । अप्रजावत्सलो राजा प्रजानां कमप्युपकारं कर्तुं न प्रवर्तेत । मृगयाव्यसनासक्तः पुनः कथं स धर्मशास्त्रादिश्रवणे तीर्थादिसम्पादने वा चेतो निदध्यात् । एवं सर्वथैव धर्मरहितः स भवेत् । अथ च मृगयासक्त्या न केषु चिदर्थलाभकरेषु व्यापारेष्वात्मानं योजयेत् सः । एवमर्थरहितोऽपि भवेदसौ । तस्माद्धर्मावधिगन्तुमिच्छन् राजा न मृगयासक्तो भवेदिति सुष्टूपदिष्टमत्र ॥ ७१ ॥

**आखेट ( शिकार ) में लगे हुए राजा के धर्म और अर्थ (दोनों) नष्ट हो जाते हैं ॥ ७१ ॥**

मदिरासेविनः कार्येषु नियोजनं प्रतिषेधन्नाह—

**अर्थेषु पानव्यसनी न गण्यते ॥ ७२ ॥**

**अर्थेष्विति ।** पानव्यसनी—पानं मद्यादिसेवनं व्यसनम् आसक्तिमयो व्यापारोऽस्येति एवम्भूतः, अर्थेषु—कार्येषु, न गण्यते—न युज्यते । मद्यपं न कार्ये विनियोजयेदिति भावः । अयमाशयः—मद्यसेवको जनः प्रमत्तो भवति । प्रमत्तो न किञ्चिद्रहस्यं गोपयितुं शक्नोति । रहस्यगोपनमेव तावत् कार्यसिद्धेर्मूलकारणम् । मदजनितबुद्धिविक्षेपादसौ विवेकं कर्तुमसमर्थः । विवेकरहितस्य न किमपि कार्यं सिध्यति । यदि कस्मिंश्चिन्निश्चित एव समयेऽल्पमात्रकमेव स मद्यादिकं सेवेत तर्हि न महती हानिः । परन्तु व्यसनी खलु न कदापि समयविभागं मात्राया अल्पत्वं च जानाति । सततमद्यपाननिरतो जनः सर्वथैव कार्यसम्पादनेऽसमर्थः, अतो न स नियोज्योऽर्थेष्विति कथितं भवति ॥ ७२ ॥

**मदिरासेवी कार्यों में नियुक्त नहीं किया जाता ॥ ७२ ॥**

राज्ञः कामाधीनता न श्रेयस्करीत्याह—

**न कामासक्तस्य कार्यानुष्ठानम् ॥ ७३ ॥**

न कामासक्तस्येति। कामासक्तस्य–मदनाधीनस्य विषयेषु प्रगाढप्रेम्णः, राज्ञ इति शेषः, कार्यानुष्ठानम्–कार्यसम्पादनम्, न भवति। कामी विलासी च राजा राज्यकार्यं किमपि सम्पादयितुं नालम्। गूढार्थविचारस्तु विषयासक्तचेतस-स्तस्मात् सुदूरं पलायेत। स्वैरविहारसापेक्षा विषया गम्भीरविचारसहचारि राज्य-कार्यं चेत्येतयोर्महद्वैषम्यम्। अतो निजराज्योत्कर्षमिच्छता राज्ञा किल कामा-सक्तिर्दूरतस्त्याज्येति भावः॥ ७३॥

**कामी ( विषयों में आसक्त रहने वाला, लम्पट ) राजा ( राज्य का ) काम नहीं कर सकता ॥ ७३ ॥**

परुषं वचो न प्रयोक्तव्यं राज्ञेत्याह—

**अग्निदाहादपि विशिष्टं वाक्पारुष्यम् ॥ ७४ ॥**

अग्निदाहादपीति। वाक्पारुष्यम्–वचनस्य कठोरता, नीरसं कठोरं वचन-मित्यर्थः, अग्निदाहादपि–वह्निसन्तापादपि, विशिष्टम्–अत्यधिकं भवति। वह्नेः सन्तापः कष्टकरो लोके। राजा च राज्यमदात् किमप्यगणयन् यदि परुषाणि वचां-सि प्रजासु प्रयोजयेत्, तर्हि तद् दुःखं प्रजानां वह्नेः सन्तापादपि गुरुतरम्। वह्नौ ज्वलनं वरं न परं कठोरवचःसहनम्। मधुरं भाषणमकुर्वन् राजा प्रकृतिभ्यो न रोचेत। प्रकृतीनां प्रेम च राज्ञा सम्पादनीयमेव। अतो मधुरभाषिणैव राज्ञा भवि-तव्यमित्येवं द्योतितं भवत्यनेन सूत्रेण॥ ७४॥

**वचन की कठोरता आग की जलन से भी बढ़कर होती है ॥७४॥**

लोकेष्वावश्यकतानुसारं मृदुर्दण्डः प्रयोक्तव्यो राज्ञेत्याशयेन ब्रूते—

**दण्डपारुष्यात् सर्वजनद्वेष्यो भवति ॥ ७५ ॥**

दण्डपारुष्यादिति। दण्डपारुष्यात्–कठोरदण्डप्रदानेन, राजेति शेषः, सर्व-जनद्वेष्यः–सकललोकशत्रुः, भवति–जायते। ऐश्वर्यगर्वितो राजा दमनीयेषु निष्ठुर-तया तीक्ष्णान् दण्डान् प्रयोजयन् लोकाप्रियो भवति। अपराधिषु दण्डेनैव प्रयो-जनम्, न च कठोरतादिकमपेक्षणीयं तत्र। मृदुतया दण्डप्रदो राजा ह्यापाततो द्वेष्योऽपि नीत्या व्यवहरन् प्रजावर्गैर्मनसा श्लाघ्य एव। अतः सर्वजनद्वेषजनकं दण्डपारुष्यं नाश्रयेद्राजेति भावः॥ ७५॥

दण्ड की कठोरता ( तीक्ष्ण दण्ड देने ) से राजा सब लोगों का द्वेषी हो जाता है ॥ ७५ ॥

श्रियमिच्छन् राजा स्वीयमर्थं न दूषयेदित्यभिप्रायेणाह—

## अर्थदूषकं श्रीः परित्यजति ॥ ७६ ॥

**अर्थदूषकमिति ।** अर्थदूषकम्—अर्थं धनं दूषयति कुव्ययेन विध्वंसयति यस्तादृशं राजानम् , श्रीः लक्ष्मीः सम्पत्तिरिति यावत् , परित्यजति—सर्वथा त्यजति । असद्व्ययं कर्तुं राज्ञः सकाशाल्लक्ष्मीरपगच्छतीत्यर्थः । यो हि राजाऽपरिमितं वृथा गर्हितञ्च धनस्य व्ययं करोति, स किल कालक्रमेण श्रिया विरहितो भवति । परिमितावश्यकश्लाघनीयव्ययेनैव लक्ष्मीः कथञ्चित् सुरक्षिता तिष्ठतीति भावः । अथ वा, श्रीः—राज्यलक्ष्मीः, अर्थदूषकम्—अर्थं विचारणीयमुपस्थितं विषयं दूषयति विनाशयति यस्तादृशं राजानम् , परित्यजति । राज्ञा हि समुपस्थितेषु विचारणीयेषु विषयेषु निष्पक्षपातमुचितं निर्णेतव्यम् । असद्विचारादिना यदि तमर्थं राजा विघातयति, तर्हि राज्योत्कर्षं कर्तुमशक्नुवन् स्वीयं प्रभुत्वमपि नाशयेत् सः । अतः श्रियमन्विच्छता सदसद्विवेकिना भाव्यं भूपेनेति भावः ॥ ७६ ॥

**सम्पत्ति अथवा राज्य-लक्ष्मी, धन का अपव्यय करने वाले अथवा कार्य को बिगाड़ने वाले राजा को छोड़ देती है ॥ ७६ ॥**

विद्वेषं भजमानं जनं दण्डनीतिमाश्रित्य वशीकुर्यादिति निर्दिशति—

## अमित्रो दण्डनीत्यामायत्तः ॥ ७७ ॥

**अमित्र इति ।** अमित्रो—विद्वेषीस्वामिभक्तिरहितः प्रजाजनेष्वन्यतमः पुरुषः, दण्डनीत्याम्—दण्डनीतेः अपराधिनियमनविधेः, आयत्तः—अधीनः । विद्रोही दण्डेन वशीक्रियत इति भावः । दण्डनीतिमाश्रित्यैव राजापराधिनो वशीकरोति । विद्रोहिणस्तु विशिष्टापराधिनः । न तेषु कदापि क्षमा कर्तुमुचिता । क्षमाकरणेन तेऽन्यान् बहूनपि विद्रोहिण उत्पादयेयुः । अतो विद्रोहिणःसर्वथैव दण्डेन वशं नेतव्या नीतिचतुरेण राज्ञेति ॥ ७७ ॥

**विद्रोही दण्डनीति से वश में किया जाता है ॥ ७७ ॥**

दण्डनीतेः प्रजारक्षणोपयोगित्वं निरूपयति—

## दण्डनीतिमनुतिष्ठन् प्रजाः संरक्षति ॥ ७८ ॥

**दण्डनीतिमिति ।** दण्डनीतिम्—अपराधिनियमनविधिम् , अनुतिष्ठन्—अनु-

चरन् राजा, प्रजाः–प्रकृतीः, संरक्षति–सम्यक् पालयति । स्वभावतः स्वार्थिनो भवन्ति मनुष्याः केचिच्चातिस्वार्थिनः परार्थमिहत्य स्वार्थं साधयितुं यतन्ते । प्रबलो दुर्बलं बाधते । शरीरशक्तिसम्पन्नाश्चौरा लुण्टाका लम्पटाश्चान्यान् सरलान् जनान् भृशं पीडयन्ति । गुणिनः सुशीलाः सदाचारा विचारता धर्मभीरवः सन्तस्तैरतितरां क्लिश्यन्ते । सदाचारनिरतादीनामेव प्रयत्नेन जनसमाजः सुखमुन्नतिं च नीयते । तेषां रक्षणं राज्योत्कर्षायात्यावश्यकम् । अपराधिनोऽदण्डयित्वा तेषां सम्यग् रक्षणमशक्यम् । अतोऽपराधिनो दण्डयित्वा सज्जनान् रक्षितुं दण्डनीतेः परमावश्यकतेति भावः ॥ ७८ ॥

**दण्डनीति का प्रयोग करने वाला (राजा) प्रजा की भली भाँति रक्षा करता है ॥ ७८ ॥**

दण्डनीतेः फलं निरूपयति –

## दण्डः सर्वसम्पदा योजयति ॥ ७९ ॥

दण्ड इति । दण्डः–कारागारप्रवेशनार्थादानादिरूपो विधिविशेषः, सर्वसम्पदा सर्वेणैश्वर्येण, योजयति–युक्तं करोति, राजानमिति शेषः । दण्डेन सकलान्यैश्वर्याणि लब्धुं शक्यन्त इति भावः । दण्डभयेन हि स्वस्वकर्तव्यनिरताः प्राकृतजना भवन्ति । स्वकर्तव्यानुष्ठानमेव तेषां सर्वेषां राज्योन्नतिं सम्पादयति । उन्नतमेव राज्यं स्पृहणीयं भवति । दण्डभयेन विना दुष्टा दुष्टताया न विरमन्ति । दुष्टताप्रसरणेन राज्यं विशृङ्खलं भवेद्विशृङ्खलं च राज्यं न सम्पदा संयुज्यते । अतो राज्याद् दुष्टतां निष्कास्य तस्मिन् सज्जनतामुपस्थाप्य दण्डो नृपं सर्वैश्वर्यसुखसम्पन्नं करोतीत्यत्रोक्तं भवति ॥ ७९ ॥

**दण्ड राजा को सब सम्पत्ति से युक्त करता है ॥ ७६ ॥**

दण्डस्य त्रिवर्गमूलत्वं दर्शयति—

## दण्डाभावे त्रिवर्गाभावः ॥ ८० ॥

दण्डाभाव इति । दण्डाभावे–दण्डस्यापराधिनिग्रहणविधेः अभावे राहित्ये, त्रिवर्गाभावः–त्रिवर्गस्य धर्मार्थकामानाम् अभावः अप्राप्तिः, भवति । दण्डाधीना हि धर्मार्थकामा इति भावः । सर्वासां प्रकृतीनां स्वस्वधर्मेषु नियोजकस्य, अपराधिनोऽपराधान्निवारकस्य राज्ये कलाविद्यावाणिज्यानां विकासकस्य दण्डस्य प्रयोगं विना शान्तिं समृद्धिञ्च नाप्नुयाद्राज्यम् । शान्तिसमृद्धिभ्याञ्च विना न

कश्चिद्धर्मकार्याणि सम्पादयितुं सुखसाधनान्यर्जयितुं भोगानुपभोक्तुं वा प्रभवति । दण्डविधानमेव धर्मार्थकामप्रसूतानां व्यापाराणां प्रयोजकम् । तदभावे तेषामप्यभावः स्यादिति विचिन्त्य न दण्डप्रयोगं त्यक्तुमर्हति धर्मार्थकामार्थी नृप इत्यत्र गूढं सूचितम् ॥ ८० ॥

दण्ड के न होने से धर्म अर्थ और काम भी नहीं होते ॥ ८० ॥

दण्डेन जना अकार्येभ्यो निवार्यन्त इति वक्ति—

## दण्डभयादकार्याणि न कुर्वन्ति ॥ ८१ ॥

दण्डभयादिति । दण्डभयात्-दण्डात् पूर्वोक्तानिग्रहरूपाद् भयाद् भीत्याः, अकार्याणि-नीतिविरुद्धानि कर्माणि, न कुर्वन्ति-नाचरन्ति, प्रजा इति शेषः । दण्डः प्रकृतीर्गर्हितकर्मभ्यो निवारयतीति भावः । आत्मनिष्ठस्य निर्मलीकृतान्तःकरणस्य योगिनो न कापि दण्डस्यावश्यकता । स स्वयमेव सदा कार्याण्येव कर्माणि करोति । किन्तु जनसमाजे न सर्वे एतादृशाः । बाहुल्येन जना अज्ञानाभिभूताः कर्तव्याकर्तव्यविचारहीनाः स्वार्थपरा इन्द्रियवशंवदा एव । प्रकृत्यैव तेऽकार्येषु प्रवर्तन्ते । ते खलु दण्डभयादेव चौर्यलुण्ठनवधादिरूपादनाचाराद्विरमन्ति । अतो दण्डं प्रयुज्य राजा प्रकृतीः सन्मार्गं गमयेदित्युक्तम् ॥ ८१ ॥

दण्ड के भय से लोग बुरे काम नहीं करते ॥ ८१ ॥

पूर्वेभ्यः सर्वेभ्यो विशिष्टं दण्डनीतेः फलमात्मरक्षणं सम्प्रति प्रतिपादयति—

## दण्डनीत्यामायत्तमात्मरक्षणम् ॥ ८२ ॥

दण्डनीत्यामिति । दण्डनीत्याम्-दण्डविधेः, आयत्तम्-अधीनम् , आत्मरक्षणम्-आत्मनः स्वस्य रक्षणं रक्षा भवति । न केवलं प्रजाः प्रत्युत राजानमपि रक्षितुं समर्था दण्डनीतिरिति भावः । पूर्वमेवोक्तं यद्विद्रोहिणो विशेषेण दण्डमर्हन्ति । विद्रोहिणामभावे हि राजा निश्चिन्ततया राज्यं शास्ति । यदि दण्डो न स्यात्तेषाम् , तर्हि ते राजानमचिरान्नाशयितुं यतेरन् । दण्डविधानेनैव पुनर्बलस्य धनस्य च वृद्धिर्भवति । धनबलवृद्ध्यैव नृपः शत्रुभ्यो रक्ष्यते । अतो दण्डो राजानं सर्वतो रक्षतीत्येतावदत्रार्थजातम् ॥ ८२ ॥

अपनी ( राजा की ) रक्षा दण्डनीति के अधीन होती है ॥ ८२ ॥

आत्मरक्षा सर्वरक्षातो वरीयसीति वक्तुं प्रक्रमते—

## आत्मनि रक्षिते सर्वं रक्षितं भवति ॥ ८३ ॥

आत्मनीति । आत्मनि—राजनि, रक्षिते—पालिते सति, सर्वम्—राज्यप्रकृत्यादिकम्, रक्षितम्—पालितं भवति । स्वयं रक्षित एव राजा सकलान् प्रजादीन् रक्षितुं समर्थ इति भावः । 'शरीरमाद्यं खलु धर्मसाधन'मिति स्वशरीररक्षा खलु सर्वेषां धर्माणां जननी । अरक्षितः किमपि कर्तुं न शक्नोति, कथं स पुनरतिदुष्करां कस्यचिद्रक्षां सम्पादयेत् ? कथितं च नीतिविदा केनचित्—"आत्मानं सततं रक्षेद् दारैरपि धनैरपि ।"इति । अतो नृपेण सर्वरक्षणार्थं प्रथममात्मरक्षा विधेयेति ॥८३॥

**अपने ( राजा के ) रक्षित रहने पर सभी रक्षित होता है ॥ ८३ ॥**

राष्ट्रस्य वृद्धिनाशौ राजाधीनाविति वक्ति—

## आत्मायत्तौ वृद्धिनाशौ ॥ ८४ ॥

आत्मायत्ताविति । आत्मायत्तौ—आत्मनः स्वस्य राज्ञ इति यावत् आयत्तावधीनौ, वृद्धिनाशौ—वृद्धिः समृद्धिर्नाशो विशेषेण क्षयश्च राष्ट्रस्येति यावत्, भवतः । राजैव राज्यं वृद्धिं क्षयं वा नयतीत्यर्थः । नीतिवैचक्षण्यधर्मपरत्वप्रजावात्सल्यशक्तिसम्पन्नत्वादिगुणैर्विभूषितो राजैव दण्डप्रयोगेण रक्षिता सन् राज्यमविरतोद्योगेन वृद्धिं नयति । राज्यवृद्धौ प्रथमं राजसत्ताऽपेक्षिता । राजसत्तायां सञ्जातायां समुचितगुणशालित्वं राज्ञोऽपेक्षितम् । राज्ञोऽभावेऽपि राज्यं स्थातुं शक्नोति, परन्तु न तत्सबलं भवति गुणशालिनं शासकमन्तरेण । सबलमेव राष्ट्रं खलु वृद्धिं प्राप्नोति । अतः सर्वत एव राजा राज्यस्य वृद्धेर्नाशस्य च कारणं भवतीति स्पष्टम् ॥ ८४ ॥

**( राज्य की ) उन्नति और अवनति दोनों ही अपने ( राजा के ) अधीन होती हैं ॥ ८४ ॥**

दण्डनीत्यादीनां चतसृणां विद्यानां प्रयोगो विज्ञाने भवतीत्याह—

## दण्डनीत्यादि विज्ञाने प्रणीयते ॥ ८५ ॥

दण्डनीत्यादीति । दण्डनीत्यादि—दण्डनीतिर्दण्डविधायिनी नीतिरादिर्यस्य तत्, 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती'ति दण्डनीतिप्रभृतयश्चतस्रो विद्या अत्र विवक्षिताः, विज्ञाने—विशिष्टज्ञाने शास्त्रानुशीलनादात्मानुभवाच्चोत्पन्ने ज्ञान इति यावत्, प्रणीयते—प्रयुज्यते । दण्डनीत्यादीनां प्रयोगस्तत्तच्छास्त्राणां परिज्ञानमवाप्यैव क्रियत इति भावः । नहि सम्यग्ज्ञानं विना कस्यापि शास्त्रस्य सुप्रयोगः क्रियते । पूर्वोक्तानां चतसृणां विद्यानामात्मानुभवसाधितं ज्ञानं ताः

विद्याः सफलीकरोतीत्येवाभिप्रायोऽत्र ॥ ८५ ॥

**विशिष्ट ज्ञान होने पर दण्डनीति आदि का प्रयोग किया जाता है।**

दुर्बलोऽपि राजा न तावदनादरणीय इति सूचयति—

## दुर्बलोऽपि राजा नावमन्तव्यः ॥ ८६ ॥

दुर्बल इति। दुर्बलः—क्षीणबलोऽपि सन्, राजा—नृपः, न अवमन्तव्यः—न तिरस्कार्यः। हीनबलमपि राजानं न तिरस्कुर्युः प्रकृतय इति भावः। प्रथमं तावदापाततो हीनबलो राजा स्वाभिमानो भवति। सोऽपि परकृतं तिरस्कारमसहमानस्तिरस्कर्तुर्हानिं कर्तुं यतते। पुनश्च राजावमाननेन तद्राज्यं विशृङ्खलं स्यात्। न कोऽपि कस्मादपि भीतः स्यात्। अधिकबलो न्यूनबलं ताडयितुं मारयितुं लुण्ठितुं वा यतेत। ईदृश्यां दुरवस्थायां सञ्जातायां जनानां जीवनस्य धनस्य धर्मस्य वा परिरक्षणं दुष्करं स्यात्। ईदृशि भयग्रस्ते जनसमाजे न कापि कला परिस्फुरति न कश्चिदुद्योगः सफलो भवति नच वाणिज्यादेरपि समुन्नतिः सम्भवति। एवं राष्ट्रं क्षिप्रमेव विनाशोन्मुखं भवेत्। अत एव सर्वोपद्रवेभ्यो रक्षकं दुर्बलमपि राजानं नावमन्येरन् प्रकृतय इत्युपदिश्यते ॥ ८६ ॥

**बलहीन राजा का भी तिरस्कार नहीं करना चाहिये ॥ ८६ ॥**

राजा स्वभावत एवान्तर्निहितप्रताप इति निरूपयति दृष्टान्तेन—

## नास्त्यग्नेर्दौर्बल्यम् ॥ ८७ ॥

नास्तीति। अग्नेः—वह्नेः, दौर्बल्यम्—शक्तिहीनता, न अस्ति—न विद्यते। अग्निरल्पोऽपि सन्नन्तर्दाहशक्तिसम्पन्नो भवतीत्यर्थः। यथा स्फुलिङ्गावस्थोऽप्यग्निस्तृणकाष्ठादिकं भस्मसात्करोत्येव तथैवाल्पशक्तिरपि राजा तिरस्कर्तॄणामपकरणाय प्रभवत्येव। अतः स्फुलिङ्गावस्थायां स्थितोऽग्निरिवाल्पशक्तिरपि राजा न तावदकिञ्चित्करो भवतीत्युक्तम् ॥ ८७ ॥

**अग्नि में दुर्बलता नहीं रहती ॥ ८७ ॥**

दण्डकस्य जीविकासम्पादकत्वं निर्दिशति—

## दण्डेन प्रणीयते वृत्तिः ॥ ८८ ॥

दण्डेनेति। दण्डेन—दण्डप्रयोगेण, वृत्तिः—आजीविका, प्रणीयते—सम्पाद्यते। समुचितदण्डप्रयोगेण जीवनसाधनानि लभ्यन्त इत्यर्थः। दण्डप्रयोगादेव निरुपद्रवं भवति राज्यम्। निरुपद्रवे च राज्ये कृषिवाणिज्यादीनां प्रसरो भवति। तेषां

प्रसरणक्रमेणोन्नतिरेव जीवनसाधनानि करोतीत्यतो वृत्त्यर्थमपि दण्ड आवश्यक इति प्रोक्तमत्र ॥ ८८ ॥

दण्ड के प्रयोग से जीविका चलती है ॥ ८८ ॥

अर्थप्राप्तेर्वृत्तिमूलत्वं दर्शयति—

## वृत्तिमूलोऽर्थलाभः ॥ ८९ ॥

वृत्तिमूल इति । अर्थलाभः–अर्थानां धनानां लाभः प्राप्तिः, वृत्तिमूलः–वृत्तिराजीविका मूलं प्रधानं कारणं यस्य एवंविधः अस्ति । वृत्तेरर्थलाभो भवतीत्यर्थः । तन्तुवायः किल पटवयनेनैव धनमर्जयति । एवं कृषीवलः कृषिकर्माश्रित्य, वणिग् वाणिज्यमवलम्ब्य, स्वर्णकार आभूषणानि कृत्वा, वर्धकिः काष्ठमयानि वस्तूनि निर्माय, व्याधः पशुपक्षिणो मारयित्वा च धनार्जनं करोति । काञ्चिदाजीविकामाश्रित्यैव जनो धनार्जने समर्थो भवतीत्याशयः ॥ ८९ ॥

धन की प्राप्ति का प्रधान कारण जीविका है ॥ ८९ ॥

अर्थ एव धर्मकामयोः प्रधानकारणमिति वक्ति—

## अर्थमूलौ धर्मकामौ ॥ ९० ॥

अर्थमूलाविति । धर्मकामौ–धर्मश्च कामश्च, धर्मस्तावदैहिकामुष्मिकसकलसुखसाधनीभूतः क्रियाविशेषः, कामः पुनः सांसारिकविषयाणां भोगेच्छा, एतौ द्वौ, अर्थमूलौ–अर्थो धनं मूलं प्रधानकारणं ययोस्तौ तादृशौ भवतः । धनेनैव पुण्यकृत्यानि विषयभोगाश्च सम्पद्यन्त इत्यर्थः । धनेन हि जनो धर्मक्षेत्राणि निर्मापयितुं सरांसि निखानयितुं याचकान् भोजयितुं दीनान् भर्तुं कस्यचिदप्युपकारं च कर्तुं वा प्रभवति । धनेनैव पुनः स्वादु भोजनम् अभ्रङ्कषं हर्म्यम् अतिमृद्वी शय्या चेतस आह्लादकानि सुगन्धिद्रव्याणि चेत्येवं विविधानि भोग्यवस्तूनि प्राप्नोति नरः । धनमेव सकलकल्याणसुखजनकमित्येतदत्रार्थजातं गर्भितम् ॥ ९० ॥

अर्थ ( धन ) के द्वारा धर्म और काम सम्पन्न होते हैं ॥ ९० ॥

अधुनार्थस्य प्रधानकारणं कार्यं, कार्यस्य वा प्रधानकारणमर्थं निर्दिशति—

## अर्थमूलं कार्यम् ॥ ९१ ॥

अर्थमूलमिति । अर्थमूलम्–अर्थस्य धनस्य मूलं प्रधानकारणम् , कार्यम्–कर्मविशेषः तत्तदाजीविकाप्रयुक्तक्रियाशीलत्वमिति यावत् , भवति । क्रियाशीलतैवार्थं जनयतीति भावः । सत्यामप्याजीविकायामुद्योगं बिना न कोऽपि धनमर्ज-

यितुं प्रभवति। सावधानतयाऽऽलस्यं विहाय कार्याणि कुर्वन्नेव सिद्धिमवाप्नोति नरः। नाकुर्वतः कुतश्चित्कश्चिल्लाभः। अतः सततक्रियाशीलेन भवितव्यं धनार्थिनेति निर्दिष्टं भवति। अथवा, कार्यम्—किमपि कर्म, अर्थमूलम्-अर्थो धनं मूलं प्रधानकारणं यस्य तादृशं भवति। धनेनैव कार्याणि सिध्यन्ति। धनहीनः पुरुषः कार्यसाधने न क्षमः। अतः कार्यार्थिना धनमेव तत्पूर्वमर्जनीयं भवतीति भावः ॥९१॥

**धन का प्रधान कारण कार्य अथवा कार्य का प्रधान कारण धन है।**

इदानीं कार्यसिद्धेः साधनमुपायं लक्षयति—

## यत्प्रयत्नात् कार्यसिद्धिर्भवति स उपायः ॥ ९२ ॥

**यत्प्रयत्नादिति**—यत्प्रयत्नात्-यस्मात् प्रयत्नाच्चेष्टनात्, कार्यसिद्धिः—कार्याणां तत्तत्कर्मणां सिद्धिः साफल्यम्, भवति-सञ्जायते, स उपायः—उपायसंज्ञां प्राप्नोतीत्यर्थः। कार्यसाधकः प्रयत्न उपायः खलु। सिद्धिरेवाभीष्टा भवति सर्वेषामखिलकर्मजातस्य। यत्प्रयोगेण सिद्धिर्लभ्यते स उपाय इत्याशयः॥ ९२ ॥

**जिस प्रयत्न से कार्यों की सिद्धि होता है उसे उपाय कहते हैं ॥९२॥**

उपायमाश्रित्य कृतं कार्यं सुकरं भवतीत्याह—

## उपायपूर्वं कार्यं न दुष्करं स्यात् ॥ ९३ ॥

**उपायपूर्वमिति**। उपायपूर्वम्—उपायः कार्यसाधकः प्रयत्नः पूर्वं प्राग् यस्मात् तत् तथाभूतम्, कार्यम्-कर्म, दुष्करम्-दुःखेन कर्तुं शक्यम्, न स्यात्—न भवेत्। दुःसाधमपि कार्यमुचितोपायावलम्बनेन सुसाधं भवतीति भावः। कार्यसम्पादनात्प्राक् तत्साफल्यविधायका उपायाः सम्यगालोच्याः। पूर्वमेवोपायानां पर्यालोचनेन समुचितप्रयोगेण च कष्टसाध्यमपि कार्यं साधयितुं शक्यते। उद्योगं कुर्वतः प्रायो न किञ्चिन्नास्त्यसम्भवमिति गूढार्थोऽत्र ॥ ९३ ॥

**उपाय सोचकर किया गया कार्य दुष्कर (असम्भव) नहीं होता।**

उपायमपर्यालोच्य कृतं कार्यं क्षिप्रमेव प्रणश्यतीत्याह—

## अनुपायपूर्वं कार्यं कृतमपि विनश्यति ॥ ९४ ॥

**अनुपायपूर्वमिति**। अनुपायपूर्वम्—अनुपाय उपायाभावः पूर्वम् प्राग् यस्मात्तत् एवम्भूतं कार्यम्, कृतम् अपि—विहितम् अपि, विनश्यति-सर्वथा नष्टं भवति न सिध्यतीति यावत्। उपायमचिन्तयित्वा कृतं कार्यं न सिद्धिं गच्छतीति भावः। किमपि कार्यं कुर्वद्भिस्तत्परिणामस्तत्साधनोपायाश्च पूर्वमवधार्याः। साधन-

सङ्ग्रहाभावे ह्यारब्धे कर्मणि सर्वथैव शक्तेर्ह्रासो भवेत्। शक्तेर्ह्रासाच्च कार्यहानिः स्पष्टैव। अतो न कदाप्यविमृश्योपायान् किमपि कार्यं कुर्यादिति तात्पर्यम् ॥९४॥

उपाय को न सोच कर किया गया भो कार्य नष्ट हो जाता है अर्थात् वह सिद्ध नहीं होता ॥ ९४ ॥

कार्यसम्पत्तिमभिलषतां पुरुषाणामुपाय एव सहायक इति वक्ति—

## कार्यार्थिनामुपाय एव सहायः ॥ ९५ ॥

कार्यार्थिनामिति। कार्यार्थिनाम्—कार्यमर्थः प्रयोजनं येषां तेषाम्, सहायः—साहाय्यप्रदायकः, उपायः—कार्यसाधकः प्रयत्न एव वर्तते। उपायाः कार्यसिद्धिमभिलषतां सहायका भवन्ति, उपायद्वारैव कार्याणां सिद्धेः स्फुटत्वादिति भावः। कार्यसाधनप्राणभूताः खलूपायाः। तांस्त्यक्त्वा न कश्चित्कार्यसिद्धिं लभते। स एव सहायो यः कार्यं साधयति। उपायाः खलु कार्याणां साधकतमा इत्यतो मुख्या इत्युक्तं भवति ॥ ९५ ॥

कार्य की सिद्धि चाहनेवालों का एक मात्र सहायक उपाय ही है।

उद्योगेन कार्यं सिध्यतीति पूर्वोक्तजाततात्पर्यमाह—

## कार्यं पुरुषकारेण लक्ष्यं सम्पद्यते ॥ ९६ ॥

कार्यमिति। पुरुषकारेण—कार्यसाधकेन चेष्टाविशेषेण उद्योगेनेति यावत्, कार्यम्—साधनीयं कर्म, लक्ष्यम्—दृश्यम् प्रत्यक्षतां गतं प्रकटमिति यावत्, सम्पद्यते-सञ्जायते। अथवा, लक्ष्यम्—उद्देश्यम् अर्थादुद्योगस्य, कार्यम् पुरुषकारेण, सम्पद्यते-सिध्यति। अयं भावः—कार्यस्य सिद्धिरुद्योगेनैव जायते। विनोद्योगं किमपि कार्यं सिद्धिं न गच्छति। 'कार्यं मे सिध्यता'दितीच्छामात्रेण कुत्रापि कार्यसिद्धिर्न दृष्टा। तथा चोक्तम्—'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथै'रिति ॥ ९६ ॥

कार्य उद्योग से सिद्ध होता है ॥ ९६ ॥

पूर्वसूत्रेण कार्यस्योद्योगसाध्यत्वं निरूप्य सम्प्रति दैवस्योद्योगसाहचर्यं प्रतिपादयति—

## पुरुषकारमनुवर्तते दैवम् ॥ ९७ ॥

पुरुषकारमिति। दैवम्—भाग्यम् पूर्वजन्मकृतं कर्मेति यावत, पुरुषकारम्—उद्योगम्, अनुवर्तते—अनुगच्छति। उद्योगस्य पृष्ठतो लग्नं दैवं वरीवर्तीत्यर्थः। अयमत्राशयः—उद्योग एव कार्यं साधयति, नहि तेन विना कार्यं सिध्यतीति निश्चित—

मेव। परम्, उद्योगस्य कार्यसाधकत्वे निश्चितेऽपि न स्वतन्त्रतयोद्योगस्तत्साधकः, तस्य दैवपरतन्त्रत्वात्। दैवं किलोद्योगस्य सहचारि। दैवानुकूल्ये सत्येवोद्योगे कार्यसाधनानुकूला शक्तिः सम्पद्यते। अन्यथा व्यर्थ एव भवेदुद्योग इति। न चात्र पूर्वसूत्रोक्तमुद्योगप्राधान्यं खण्डितं भवतीति शङ्क्यम्, दैवसहचरितोद्योगस्य कार्यसाधनानुकूलशक्तेः प्रतिपादनादुद्योगप्राधान्यस्य सर्वथाऽव्याहतत्वादित्यलम् ॥९७॥

**दैव (पूर्वजन्म का किया हुआ कर्म) उद्योग साथ रहता है ॥ ९७ ॥**

'दैवानुकूल्ये सत्येव कार्यसिद्धि'रित्येवं पूर्वोक्तमर्थं द्रढयति—

## दैवं विना अतिप्रयत्नं करोति यत्तद् विफलम् ॥ ९८ ॥

**दैवमिति।** दैवं विना-दैवानुकूल्यमन्तरेणेति यावत्, जन इति शेषः, यद् अतिप्रयत्नं करोति—यत्किल प्रभूतमुद्योगमातनुते, तत्-उद्योगकरणम्, विफलम्-निरर्थकं भवति। अनुकूलं दैवं विना विहितः सुमहानुद्योगो न तावत्कार्यं साधयतीत्यर्थः। नन्वेवं सति दैवं विना कार्यसिद्धेरदर्शनात् किमित्युद्योगः करणीय इति चेन्न, उद्योगस्यैव मुख्यतः कार्यसाधकत्वाद्विनोद्योग दैवानुकूल्येऽपि कार्याऽनिष्पत्तेर्दर्शनात्। दैवं किलोद्योगस्य सहायकम्। उद्योगाद्भीता अलसा एव दैवमात्रावलम्बिनो भवन्ति। कार्यसिद्धिस्तु तेषां नास्त्येवेति भावः। प्रतिपादितं चैतत्—'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी'रित्यत्र। अत्रेदं तत्वम्—न केवल उद्योगो नापि केवलं दैवं किन्तु द्वयोः साहचर्यमेव कार्यसाधकम्। तत्र यथावसरं द्वयोः प्राबल्यम्। प्रबलो दु ॅलं बाधत एवेति क्वचिदुद्योगस्य कुत्रचिच्च दैवस्य विजयः। उद्योगेन भाग्यं परीक्षणीयमिति गूढोऽर्थः।

अन्ये च टीकाकृतः—पूर्वसूत्रे **पुरुषकारमनुवर्तते दैवमित्यत्र** 'दैवस्य पुरुषकारानुसरणं नाम उद्योगानुकूलत्वम्, यादृश उद्योगस्तादृशमेव भाग्यं परिणमती'त्येवमर्थं कल्पयन्त उद्योगप्राधान्यं स्फुटतां नयन्ति। इत्थं च-**दैवं विनेति** सूत्रं दैवप्राधान्यबोधकं प्रकृतार्थविरुद्धं मन्यमानाः केनचिदत्र प्रक्षिप्तमिदमित्येवं प्रतिपादयन्ति। इतरे च—उद्योगप्राधान्यसाधनाय 'पुरुषकारोऽनुवर्तते दैव'मित्येवं पूर्वसूत्रे पाठपरिवर्तनसाहसं दर्शयन्तो '**दैवं विनेति** सूत्रं दैवप्राधान्यपरं चाणक्यस्यास्तिक्यभावद्योतक'मित्येतत्कल्पयन्ति। अत्र च कियत्तेषां बुद्धिकौशलमिति तु स्वयमेव निपुणं निरूपणीयं बुद्धिमद्भिरित्यलं पराक्षेपप्रतिपादनेन ॥ ९८ ॥

**दैव के ( भाग्य की अनुकूलता के ) बिना, मनुष्य जो विशिष्ट प्रयत्न करता है वह सब व्यर्थ हो जाता है ॥ ९८ ॥**

उद्योगं कुर्वत एव जीवनं निर्वहतीत्याह—

**अनीहमानस्य वृत्तिर्न सम्पद्यते ॥ ९९ ॥**

**अनीहमानस्येति** । अनीहमानस्य–चेष्टामकुर्वतः, ईहा चेष्टा सा च कार्यसाधनानुकूलः कार्यविशेषः, अलसस्योद्योगमकुर्वाणस्येति यावत् , वृत्तिः–जीवनम् , न सम्पद्यते न सम्भवति । स्वात्मरक्षायै किमपि प्रयतनं कार्यमेव । यदि तदर्थं न किञ्चिच्चेष्टेत मनुष्यस्तर्हि जीवननिर्वाहस्तस्य दुःसम्भवः । केवलं भाग्यावलम्बेन जीवनं न सम्भवति । उद्योगो न क्रियेत चेद् भाग्यमनुकूलमपि किं नाम कर्तुं शक्नुयात् । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः । अत उद्योगद्वारकमेव जीवनं मनुष्याणामिति नूनं निर्विवादम् ॥ ९९ ॥

**चेष्टा (उद्योग) न करने वाले का जीवन–निर्वाह नहीं होता ॥ ९९॥**

विचारपुरःसरमेव कार्यमारभणीयमितीदं मुख्यं नीतितत्त्वमुपदिशत्येतदध्यायसमाप्तौ सूत्रकारश्चाणक्यः—

**पूर्वं निश्चित्य पश्चात्कार्यमारभेत ॥ १०० ॥**

## इति चाणक्यसूत्रे प्रथमोऽध्यायः ।

---

**पूर्वमिति** । पूर्वम्–कार्यारम्भात्प्राक् , निश्चित्य–कार्यविषयकमुचितं विचारं कृत्वा, पश्चात्—तदनन्तरम् , कार्यम्-कर्तुमिष्यमाणं कर्म, आरभेत—उपक्रमेत । अयमाशयः—'कार्यमिदमनेन रूपेण कर्तव्यम् , एवं कृत एवं भविष्यती'त्यादिकमावश्यकं पूर्वं सर्वं विचारणीयम् , ततः परं कार्यस्योपक्रमणं श्रेयस्करम् । यदि नाम त्वरयोपेक्षया वा करणीयकार्यविषयकं कमपि निश्चयमकृत्वा तत्कार्यं कर्तुं प्रवर्तेत जनस्तर्हि तत् कां दिशं गच्छेत् किं वा तत्स्वरूपं सिद्धं स्यादित्येतत्सर्वमाकुलमेव स्यात् । विनायकं कर्तुमिच्छन् वानरमेव कदाचित्कुर्यात् सः । अतो मानसाभिलषितं कार्यं साधयितुं पूर्वं तदुपक्रमात्तद्विचारः कर्तुमतितरामावश्यको मनुष्याणामित्यलं पल्लवितेन ॥ १०० ॥

यस्यागाधमतेरुदारचरितैर्लोकः कृतार्थीकृतो
यः प्रज्ञाप्रमदाप्रियः प्रणयवान् नः संस्कृते रक्षणे ।
आर्याणां सुकृतं सदार्जवगुणं नीत्या च योऽपूपुषत्
क्लृप्तस्तेन हि विष्णुगुप्तविदुषा ग्रन्थोऽयमुज्जृम्भते ॥ १ ॥

अत्रत्यानि चिरं विचारकुसुमान्याहृत्य यत्नान्मुदा
टीकास्रग् ग्रथिता मया मतिमयैः सूक्ष्मैर्गुणैः साम्प्रतम् ।
धीराणां सुचिरं चकास्तु हृदये सेयं गुणग्राहिणा-
मस्त्वेतद् ग्रथनं विसंष्ठुलमपि श्रीमद्गुरूणां मुदे ॥ २ ॥

इति श्रीविजयशङ्करमिश्र एम्० ए० कृतायां चाणक्यसूत्रव्याख्यायां
बालबोधिन्यां प्रथमोऽध्यायः समाप्तिमगात् ।



कार्य का निश्चय ( उचित विचार ) करने के बाद कार्य का आरम्भ करना चाहिये ॥ १०० ॥

नीतिसूत्र के अर्थ को सरला सरल बताव ।
अवसि देखिअहि सुजनगन, नाहिंत मन पछिताव ॥ १ ॥

पं० अनन्तरामशास्त्री वेताल साहित्याचार्य कृत सरला नामक
भाषाटीका समाप्त ।

---

॥ श्रीरस्तु ॥

---

प्राप्तिस्थानम्
चौखम्बा-संस्कृत-पुस्तकालय,
बनारस सिटी